# Atul chooses the best!

Atul and his mother go to the supermarket.

STORES

What's this, Atul?

The best toy for my baby brother!

What's this?

The best dress for my little brother!

Ma, pick up only the best for my brother!

"Mysore Sandal Baby soap is the best soap for babies!
It is made of natural ingredients like sandalwood oil and almonds. Sandal oil keeps the baby's skin cool, clean and free from prickly heat! The oil of almonds makes the baby's skin glow with health!"

Then pick up two, Ma! One for baby and one for me!






The house of Mysore Sandal has been bringing the goodness of sandalwood right into your homes for over 80 years.

For greater cleanliness and hygiene, turn to MYSORE SANDAL BABY SOAP.

A 
ACTIVE

B 
BUZZ BOSS

C 
CADET DX

D 
DEVIL DX

E 
ELEPHANT

F 
FISH

G 
GIRAFFE

H 
HEN

I 
INSECT

J 
JOKER

K 
KIDD DX

L 
LIL ANGEL
LAMBADA LIVEO

M 
MISSILE MISS INDIA Jr

N 
NEST

O 
ORANGE

P 
PIRANHA

Q 
QUEEN Jr

R 
ROBO COP

S 
SPARKY SALSA

T 
TERMINATOR




V

W

The largest range of kids bikes
**HERO CYCLES**
*THE ABC OF CYCLING*

एतस्य अङ्कस्य विशेषाः सम्पुटः - १८ फेब्रवरी - २००२ सञ्चिका - ११

















## अन्तरङ्गम्





**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandmama India Ltd.***
**to**
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384,
2347399
e-mail : advertisements@chandamama.org
**देहली -**
*मोना भाटिया*
Ph - 011-6515111/
6565513/6565516
**मुम्बयी -**
*शकीलमुल्ला*
Ph - 022-2661599/
2661946/2653057



*संस्थापकौ –*
**चक्रपाणिः नागिरेड्डी च**

# एकविंश्यां शताब्द्यां प्रेमसौहार्दादीनां स्थानम्

वयं विविधानाम् अणुजीविनां विषये शृणुमः । वातावरणे स्थिताः ते मानवानाम् आरोग्यं नाशयन्ति । एते अणुजीविनः निसर्गे उत्पन्नाः सन्तः वायौ, जले, भूमौ वा निवसन्ति । सस्यानां पशूनां वा द्वारा तेषां प्रसारः भवति । किन्तु वैज्ञानिकसंशोधनानां परिणामतः एतेषां निग्रहणं, नाशनम्, एतेभ्यः आत्मरक्षणं च शक्यम् अस्ति इदानीम् ।

लोके अन्यविधाः अपि अणुजीविनः सन्ति । एते मानवानां मनस्सु जायन्ते । 'सिद्धान्तः' इति एतेषां नाम । एतान् अवलम्ब्य एव जनाः, देशाः, पक्षाः च जीवन्ति । अतः लक्ष्यविशेषस्य साधनार्थम् एतेषाम् उपयोगः क्रियते । किन्तु दौर्भाग्यं नाम बहूनां सिद्धान्तानाम् आस्था मानवहितसाधने न भवति ।

उदाहरणार्थं भयोत्पादकताम् एव परिशीलयाम । एषा केनापि कारणेन आरब्धा स्यात् नाम, किन्तु एतस्याः अन्तिमपरिणामः तु विनाशः । अतः एतां 'सिद्धान्त'पदेन निर्देष्टुं न शक्नुमः सर्वथा । अद्य बहवः देशाः भयोत्पादकताव्याधिग्रस्ताः सन्ति । भयोत्पादक-कार्यजालस्य कारणतः बहवः देशाः त्रस्ताः अपि सन्ति । अस्वस्थचित्तानां मनसि उत्पन्नायाः एतस्याः मारकक्रियायाः आहुतयः भवन्ति निरपराधाः मानवाः ।

वयम् इदानीम् एकविंश्यां शताब्द्यां स्मः । 'प्राणानां निमित्तं प्राणाः अपहर्तव्याः, अन्नस्य निमित्तं अन्नम्' इत्येषा बर्बरनीतिः अद्य न व्यवहारयोग्या । वयं वदामः लिखामः च यत् परस्परप्रीतिः सौहार्दभावः च मानवतायाः आधारस्तम्भः इति । वस्तुतः अपि ते यथा तादृशाः भवेयुः तथा द्रष्टुं कर्तुं च अयं योग्यः कालः ।

*सम्पादकः –* **विश्वम्**

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-५

आधुनिकभारते अपि विविधेषु क्षेत्रेषु अपूर्वतां प्रदर्शितवन्तः नायकाः सन्ति अनेके । तान् अधिकृत्य अत्रास्ति प्रश्नावली ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. भारतीयराष्ट्रियसैन्यं (इण्डियन् न्याषनल् आर्मी) संस्थापितवान् नेता कः ?
.................................................

2. 'चाम्पियन् आफ् दि सीस्' इति ख्यातः एषः तमिळुनाडुमूलः । स्वस्य शिप्पिङ्गसंस्थाम् आरब्धुम् एषः आंग्लैः सह सङ्ग्रामं कृतवान् । सः कः ?.................................

3. स्वस्य बाल्ये एव व्याघ्रं मारयित्वा कः स्वातन्त्र्यसङ्ग्रामवीरः बिरुदं प्राप्तवान् ?
.................................................



4. स्वमित्रैः सह गत्वा बाजनगरे ट्रेन्यानं स्थगयित्वा आंग्लैः सह युद्धाय आयुधानां सङ्ग्रहणाय धनं लुण्ठितवान् स्वातन्त्र्यवीरः कः ?.................................

5. नानासाहिबसैन्ये स्थितः सः आंग्लानां हस्ततः कानपुरं स्वाधीनीकृतवान् । ग्वालियरस्य स्वाधीनीकरणे झान्सीराज्ञ्याः साहाय्यं च कृतवान् १८५७ तमे वर्षे । तस्य नाम किम् ?.................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः .................................................
.................................................
.................................................
.................................................

भागग्रहीतुः नाम .................................
वयः .................... कक्ष्या ....................
सङ्केतः .................................................
.................................................
.................................................
पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

भारतनायकस्पर्धा-५
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५ मार्च् - २००२

***नियमाः -***

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।







# उत्तरदायित्वम्

रामपुरस्य सरोवरस्य तीरे केचन निर्धनाः वसन्ति स्म । तेषु सुशान्तः अपि अन्यतमः । पत्नीपुत्रादिभिः सह सः तत्र निवसति स्म ।

सुशान्तः अलसशिखामणिः । गृहस्य पुरतः मञ्चं प्रसार्य तदुपरि शयानः सः कालं यापयति स्म । सः दिवास्वप्नं पश्यन् चिन्तयति स्म यत् कदाचित् वा मम भाग्यं फलितं भविष्यति, अहं च महाधनिकः भविष्यामि इति । परिश्रमं किञ्चित् अपि अकृत्वा अपि केचन धनिकत्वं प्राप्तवन्तः इति तेन श्रुतम् आसीत् । अतः यदि भाग्यम् अनुकूलकरं स्यात् तर्हि अहम् अपि महाधनिकः भवेयम् एव इति सः चिन्तयति स्म ।

पत्युः एताम् अकर्मण्यतां दृष्ट्वा तस्य पत्नी विमला नितरां कुपिता भवति स्म । कार्यं न क्रियते चेत् उदरपूरणम् कष्टाय इति सा तं बहुधा बोधितवती । किन्तु सुशान्तः एतादृशानि वचनानि उपेक्षया पश्यति स्म । यथापूर्वम् आलस्यमयजीवनम् अनुवर्तयति स्म । असहाया विमला किं वा कुर्यात् ? अन्यान्यगृहेषु कार्यं कुर्वती सा कथमपि कुटुम्ब-पोषणं करोति स्म ।

एकदा सुशान्तः गृहस्य पुरतः मञ्चे शयितः आसीत् । तदवसरे एका दुर्बला शुनकी तत्र आगता । ताम् अनुसृत्य चत्वारः पञ्च वा शुनकशिशवः अपि आगताः । ते क्षीरस्य पानार्थं मातरं पुनः पुनः पीडयन्ति स्म । किन्तु दुर्बला शुनकी तेभ्यः पर्याप्ततया क्षीरं दातुम् असमर्था असीत् । अतः सा तान् निवारयितुं वेगेन धावति स्म । बुभुक्षिताः शुनकशिशवः ताम् अनुसर्तुम् अशक्नुवन्तः तत्रैव पतित-वन्तः ।

शुनकी मन्दं गृहं प्रविष्टवती । गृहं प्रविश्य

सा यावत् अन्नपात्रे मुखं निवेशितवती तावता विमला प्रत्यागता । अन्नपात्रे मुखं निवेशितवन्तीं शुनकीं दृष्ट्वा सा नितरां कुपिता । द्वारसमीपे स्थितम् एकम् दण्डम् आनीय शुनकीं सम्यक् प्रहृतवती । शुनकी कुंयकुंयूशब्दं कुर्वती गृहात् निर्गता ।

शुनक्या यत् मुखेन स्पृष्टं तत् को वा खादेत् ? अतः विमला अनन्यगतिकतया तत् अन्नं गृहात् बहिः क्षिप्तवती । शुनकी तस्याः पुत्राः च झटिति तत्र आगत्य तत् अन्नं खादितवन्तः । शुनक्याः उदरं पूर्णं जातम् । अतः सा स्वस्य पुत्रेभ्यः क्षीरं दातुं समर्था जाता ।

अनन्तरदिने अपि तस्मिन् एव समये शुनकी तद्गृहसमीपम् आगतवती । एतदवसरे अपि विमला तां दृष्ट्वा पाषाणखण्डक्षेपणेन निवारितवती । शुनकी वेदनाम् अनुभवन्ती कुंयकुंय् कुर्वती ततः निर्गतवती ।

मञ्चे उपविश्य दिवास्वप्नं पश्यता सुशान्तेन एषः शब्दः श्रुतः । सः उत्थाय मञ्चे उपविष्टवान् । प्रवृत्तं सर्वम् अवगतम् आसीत् तेन । सः असन्तोषेण उक्तवान् - ''एषा शुनकी किम् अद्यापि आगता ? ह्यः बहवः प्रहाराः तया प्राप्ताः । तथापि विवेकः न प्राप्तः वराक्या'' इति ।

एतत् श्रुत्वा विमला उक्तवती - ''वराकी सा शुनकी परिवारपालनं कथम् इति सदा चिन्तयति । ह्यः प्रहाराः प्राप्ताः चेदपि अन्ते अन्नं प्राप्तम् एव तया । अतः अद्यापि सा प्रहारान् प्राप्तुं सिद्धा अस्ति । पुत्राणां पालनम् एव तस्याः एकमात्रलक्ष्यम् । तदर्थं सा महाकष्टानि अपि सोढुं सिद्धा एव । शुनककुलीया अपि सा परिवारपोषणे एतावतीम् आस्थां प्रदर्शयति । किन्तु मानवकुले जातः भवान् तु निश्चिन्तः । किमपि दायित्वम् अस्वीकृत्य मञ्चे शयानः व्यर्थं कालं यापयति । किम् अहं वदानि ? शुनकात् अपि निकृष्टं जीवनं जातं भवतः । व्यर्थकालयापनेन किम् ?'' इति ।

पत्न्याः वचनानि सुशान्तस्य हृदयम् अस्पृशन् । अतः सः झटिति मञ्चात् उत्थाय आलस्यम् अपनीय उद्योगान्वेषणार्थं ततः प्रस्थितवान् ।



# वणिजः अविवेकः

कश्चन वणिक् आसीत् । सः कुसीदवाणिज्यं करोति स्म । तेनैव सह अन्यविधवाणिज्यम् अपि सः करोति स्म । अतः अल्पे एव काले तेन कोटिशः रूप्यकाणि सङ्गृहीतानि । यदा विरामः भवति तदा सरोवरं गत्वा मत्स्यग्रहणं तस्य प्रवृत्तिः । एषा प्रवृत्तिः तस्मै विशेषतः रोचते स्म ।

कदाचित् सः मत्स्यग्रहणाय नौकायाम् उपविश्य सरोवरस्य मध्यभागं गतवान्, जालं प्रसारितवान् च । जाले एकः मत्स्यः पतितः । तं सः उन्नीय नौकायां स्थापितवान् ।

सः मत्स्यः सामान्यः न । पञ्चवर्णोपेतः सः सूर्यः इव प्रकाशते स्म । वणिक् तं मत्स्यं दृष्ट्वा आश्चर्यचकितः । जलाभावतः सः मत्स्यः श्वासोच्छ्वासार्थं कष्टम् अनुभवति स्म । सः अवदत् - ''अहम् अस्मि किन्नरजातीयः । त्रीन् वरान् प्रार्थयतु । अहं भवतः अपेक्षां पूरयिष्यामि । शीघ्रातिशीघ्रं मां सरोवरे त्यजतु'' इति ।

''त्रयः न, पञ्च वराः दातव्याः'' - वणिक् अवदत् ।

कष्टेन श्वासोच्छ्वासं कुर्वन् मत्स्यः अवदत् - ''अहं त्रीन् एव वरान् दातुं शक्नोमि । पञ्च दातुं सर्वथा न शक्यते'' इति ।

''किं चर्चया कालयापनेन ? सार्धचतुरः वरान् ददातु तावत्'' वणिक् अवदत् ।

''त्रीन् एव वरान् दास्यामि अहम्'' - मत्स्यः अवदत् ।

''अहं तु वणिक् । दानस्वीकारादिविषये दीर्घचर्चा मह्यं न रोचते । चतुरः वरान् ददातु'' - वणिक् अवदत् । मत्स्यः किमपि न अवदत् । यतः तावता एव सः गतप्राणः जातः आसीत् ।



अत्रास्ति प्रश्नावली !!

# कोरापुट्

परिसरप्रियाणां प्रियः प्रदेशः कोरापुट् । ओरिस्साराज्यस्य एतत् जनपदं प्राकृतिकसौन्दर्येण पूर्णम् अस्ति । समुद्रतलात् २९९० पाद-परिमितौन्नत्ये प्रसिद्धस्य दण्डकारण्यस्य पार्श्वे अस्ति एतत् ।

एतस्मिन् कोरापुट्जनपदे स्थितं जेयपुरम् एकं वाणिज्यकेन्द्रम् । एतस्मिन् जनपदे जलपाताः वन्य-पशवः च प्राधान्येन दृश्यन्ते । जेयपुरं केन्द्रीकृत्य समीपस्थानि रमणीयानि विविधस्थलानि प्रति गमनागमनं शक्यते ।

जेयपुरतः ७० कि.मी दूरे मक्काकुण्डनद्याः जलतः उत्पन्नः 'दुडुमा'जलपातः अस्ति ।

अपरं दर्शनयोग्यं स्थलं नाम गुप्तेश्वरम् । भगवतः शिवस्य गुप्तेश्वराभिधानस्य गुहामय-मन्दिरम् अस्ति जेयपुरतः ८५ कि.मी. दूरे ।

एतस्य जनपदस्य राजधान्याः नाम अपि कोरापुट् इत्येव । बहरामपुरतः कोरापुटं प्रति गमनमार्गे अस्ति रायगडः । एषः प्राकृतिक-सौन्दर्येण पूर्णः ।

तिसृणां नदीनां सङ्गमस्थलं 'मिनाजोला'नामकं १३४ कि.मी दूरे अस्ति । एतच्च स्थलं सौन्दर्येण यथा तथैव पावित्र्येण अपि समृद्धम् । कोरापुट् बहूनां मूलजनजातीयानाम् आवासस्थानम् अपि अस्ति ।

## प्रश्नोत्तरस्पर्धा भवदर्थम् !

**ऊनचतुर्दशवर्षीयाः अत्र भागं वोढुम् अर्हाः !!**

### प्रश्नावली - ६

१. कोरापुट्जनपदे हरिद्वर्णीयखातानां मध्ये एकं विमानयन्त्रनिर्माणागारम् अस्ति । तत् स्थलं किम् इति किं भवन्तः जानन्ति ?

..........................................

२. एशियाखण्डे एव अतिमहत्त्वेन ख्यातं 'नेल्को'-नामकम् अल्यूमिनियंयन्त्रागारं कोरापुट्जनपदे कुत्र अस्ति ? ..........................................

३. नागवल्लीनदी यत्र जलपातद्वयं निर्माति, यत्र च अपूर्वं महाशिलाद्वयं निर्मितं दृश्यते, तत् स्थलं किम् इति किं भवन्तः जानन्ति ?

..........................................

भवताम् उत्तराणि रिक्ते स्थले लिखित्वा नाम-सङ्केतादिभिः अधस्तनं विवरणपत्रं प्रपूर्य अधोनिर्दिष्ट-सङ्केताय प्रेषयन्तु -

**Orissa Tourism Quiz Contest
Chandamama India Limited
No.82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097**

नाम - ..........................................

वयः - ..........................................

सङ्केतः - ..........................................

..........................................

Pin : .................. Phone ..................




Winners picked by Orissa Tourism in each contest will be eligible for **3 days, 2-night** stay at any of the **OTDC Panthanivas**, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism family members. Orissa Tourism, Paryatan Bhaven, Bhubaneswar-751 014. Ph: (0674) 432177, Fax : (0674) 430887, e-mail : ortour@sancharnet.in. Website : Orissa-tourism.com



# यक्षपर्वतः

## १२

*(खड्गवर्मा जीवदत्तः च उपायेन वीरपुरीयसैनिकान् बिलदुर्गे बन्धिनः कृतवन्तः । सेनाध्यक्षः सर्वे सैनिकाः च स्वस्य पराजयम् अङ्गीकृतवन्तः । समरबाहुप्रभृतयः यदा पर्वतदुर्गसमीपम् आगताः तदा तत्र वृद्धः वीरपुरीयः मन्त्री दृष्टिगोचरः जातः । मन्त्री समरबाहोः स्वतन्त्रराजत्वम् अङ्गीकृतवान् । ततः सः खड्गवर्मजीवदत्ताभ्यां सह नदीसमीपं गतवान् । तदनन्तरम्.........)*

खड्गवर्मा जीवदत्तः च वीरपुरीयमन्त्रिणा सह नदीतीरं गतवन्तौ । नद्यां रथाकारिका एका नौका आसीत् । सा तयोः दिशि एव आगच्छन्ती आसीत् । खड्गवर्मजीवदत्तौ अवधानपूर्वकं तां दृष्टवन्तौ । ततः ताभ्यां ज्ञातं यत् रथाकारेण निर्मिता सा नौका काष्ठमयी इति ।

जीवदत्तः वीरपुरीयमन्त्रिणं पश्यन् पृष्टवान् – ''महामन्त्रिवर्य ! यक्षद्वारा आवयोः विषये अधिकं विवरणं प्राप्तम् इति उक्तवान् भवान् । किं तं यक्षं भवान् नौकायां दृष्टवान् ?'' इति ।

''अयि क्षत्रियवीरौ, भवतोः पुरतः कमपि विषयं न गोपयामि अहम् । यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण वदिष्यामि । गतरात्रौ द्वितीयप्रहरे कश्चन यक्षः आकाशमार्गेण आगतवान् । तत्समये वीरपुरीया राजकुमारी वसन्तकुमारी स्वसखीभिः सह वार्तालापं कुर्वती आसीत् । सः यक्षः बलात्कारेण ताम् अपहृत्य आत्मना सह नीतवान् । गमनसमये तेन एकं ताडपत्रं स्थापितम् आसीत् । ततः ज्ञातं यत् सः एतेन क्रमेण पद्मसेनराजस्य पुत्रीं पद्मावतीम् अपि अपहृतवान् इति'' इति उक्तवान् मन्त्री ।

मन्त्रिणः वचनं श्रुत्वा जीवदत्तः गम्भीर–



वदनः जातः । सः अवदत् – ''अयम् एव यक्षः अरण्यपुरप्रदेशे मिलितः आसीत् । सः तत्र उक्तवान् आसीत् यत् पद्मावती मया परिणीता, अतः तां मत्स्थलं प्रति नयन् अस्मि इति । असत्यकथकः सः'' इति ।

''तेन यत् ताडपत्रं स्थापितम् आसीत् तत्र सः आत्मप्रशंसापराणि वाक्यानि लिखितवान् आसीत् । सः वदति – विन्ध्यपर्वते स्थितं शिलामयं रथं नाशयितुं भवद्भ्यां प्रतिज्ञा कृता आसीत् इति । किम् एतत् सत्यम् ?'' इति अपृच्छत् मन्त्री ।

जीवदत्तः यावत् उत्तरं वक्तुम् उद्युक्तः तावता खड्गवर्मा अवदत् – ''आम्, एतत् सत्यम् एव । तं दुष्टं यक्षं दण्डयिष्यामः वयम् । ततः पद्मावतीं वसन्तां च मोचयिष्यामः'' इति ।

तावता सा नौका तीरं प्राप्तवती आसीत् । यक्षः इव आभूषणानि धृतवान् कश्चन पुरुषः नौकायाः अग्रभागम् आगत्य तान् त्रीन् अपि सकृत् अवधानपूर्वकं दृष्ट्वा अपृच्छत् – ''विन्ध्य-पर्वते स्थितं शिलारथं कम्पयितुं समर्थः वीरः भवत्सु कः ?'' इति ।

खड्गवर्मा जीवदत्तः च उभौ अपि हस्तम् उन्नीतवन्तौ । तदा यक्षः उपहासमिश्रितस्वरेण अवदत् – ''एवं तर्हि उभौ अपि नौकाम् आगच्छताम् । भवन्तौ अहं यक्षपर्वतं नेष्यामि, यत्र च मम मित्रं यक्षः मणिरञ्जितः निवसति । पद्मावती वसन्ता चापि तत्रैव स्तः । ते सः अचिरात् एव परिणेष्यति'' इति ।

खड्गवर्मा जीवदत्तः च नौकाम् आरूढ-वन्तौ । जीवदत्तः यक्षम् अपृच्छत् – ''भवतः नाम किम् ?'' इति ।

''मम नाम मणिभूषणः इति । मम मित्रस्य नाम मणिरञ्जितः इति । सः पराक्रमेण असामान्यः । तत्सदृशः प्रायः लोके अन्यः नास्ति । मन्त्रतन्त्रादिषु सः अपूर्वशक्तिमान् । यक्षपर्वतं प्रति गमनं नाम अपायस्य स्वागती-करणम् । स्वस्य मृत्युं स्वयं स्वागतीकुर्वन्तौ स्तः भवन्तौ'' इति अवदत् यक्षः ।

''एवम् ! अस्माकं शक्तिम् अभिजानातु किञ्चित्'' इति वदन् जीवदत्तः स्वस्य मन्त्रदण्डं तस्य स्कन्धे स्थापितवान् । एतस्मात् यक्षः चीत्कारं कृतवान् । वज्राघातं प्राप्तवान् इव सः अकम्पत । ''अहो ! कियती शक्तिः अस्ति भवतः मन्त्रदण्डे ! कथम् एषा शक्तिः सम्पादिता भवता ?'' इति अपृच्छत् यक्षः ।

जीवदत्तः उत्तरं किमपि अवदन् मन्दस्वरेण कमपि मन्त्रम् अजपत् । ततः सः स्वस्य तर्जन्या

तं यक्षम् अस्पृशत् । एतस्मात् यक्षः महान्तं हाहाकारं कुर्वन् भूमौ अपतत् ।

क्षणकालस्य अनन्तरं सः शक्तिं सम्पाद्य उत्थाय – ''भवान् मम मित्रम् इव शक्तिसमर्थः अस्ति । भवतः शत्रुता कथम् अभवत् इति अहं न जाने'' इति ।

तदा खड्गवर्मा क्रोधेन स्वस्य खड्गम् उन्नीय चालयन् अगर्जत् – ''अलं व्यर्थवार्तालापेन । विना प्रतिवचनं यक्षपर्वतं प्रति नौकां नयतु, यत्र च भवतः मित्रं वसति । आवां तं खण्डशः कर्तयित्वा काकशृगालादिभ्यः वितरिष्यावः । तं च समूलं नाशयिष्यावः'' इति ।

भीतिजनकयोः एतयोः उभयोः व्यवहारात् भीतः यक्षः अपमानम् आत्मनि एव निगूहन् – ''मान्यौ ! भवन्तौ आनेतव्यौ इति मणिरञ्जितः आज्ञापितवान् अस्ति । आज्ञापालनमात्रं मम कर्तव्यम् । राजकुमार्योः अपहरणे शिलारथविषये वा मम हस्तक्षेपः कोऽपि नास्ति'' इति विनयेन अवदत् ।

जीवदत्तस्य आज्ञायाः अनुगुणं यक्षः नदीमार्गेण नौकाम् अग्रे नेतुम् उद्युक्तः अभवत् । तीरे स्थितः मन्त्री हस्तम् उन्नीय खड्गवर्माणं जीवदत्तं च आशीर्वादेन अनुगृहीतवान् ।

यदा नदीमार्गस्य अर्धभागः अतिक्रान्तः तदा जीवदत्तस्य मनसि सन्देहः उत्पन्नः – ''यस्याम् उपविश्य मणिरञ्जितः आकाशमार्गेण सञ्चरति सा एव नौका एषा न खलु ?'' इति । सः मणिभूषणम् एतद्विषये पृष्टवान् ।

तदा मणिभूषणः अवदत् – ''सा नौका न एषा । तस्य सर्वाः नौकाः रथाकारेण एव



भवन्ति । रथाकारः तस्मै विशेषतः रोचते'' इति ।

एतत् श्रुत्वा जीवदत्तः हसितवान् । तेषां नौका पर्वतपार्श्वे गच्छन्ती आसीत् । नदीम् उभयतः महावृक्षाः दृश्यन्ते स्म । सः यक्षम् अपृच्छत् – ''किम् एषः विन्ध्यपर्वतप्रदेशः ?'' इति ।

''आम्'' इति वदन् शिरः चालितवान् यक्षः । सूर्यास्तम् उपस्थितं दृष्ट्वा जीवदत्तः खड्गवर्माणम् अवदत् – ''मित्र ! अद्य रात्रौ अत्रैव कुत्रचित् वासः वरम् । भोजनं समाप्य अत्रैव वासं करवाव । सूर्योदयानन्तरम् गमनं चिन्तयाव । तदेव युक्तं स्यात्'' इति ।

एतत् श्रुत्वा अनङ्गीकारं प्रदर्शयन् मणिभूषणः अवदत् – ''शीघ्रातिशीघ्रं भवन्तौ आनेतव्यौ इति मम मित्रेण आदिष्टम् अस्ति ।

यदि रात्रौ अत्रैव वासः क्रियेत तर्हि मित्रस्य वासस्थलस्य प्राप्तौ विलम्बः स्यात्'' इति ।

तदा जीवदत्तः कठोरस्वरेण अवदत् - ''अत्र वयं यत् वदामः तदेव पालनीयम् । आज्ञाकर्तारः वयं, न तु कन्यापहरणे सिद्धहस्तः भवतः सुहृत् । नौकागतिं परिवर्त्य तीरं प्रति नयतु । श्रुतं खलु ?'' इति ।

तयोः सामर्थ्यं सम्यक् जानाति स्म सः यक्षः । अतः सः विना प्रतिवचनं नौकां तीरसमीपं नीतवान् । तीरं यदा प्राप्तं तदा खड्गवर्मजीवदत्तौ नौकातः अवतीर्णौ । जीवदत्तः खड्गवर्माणम् अवदत् - ''अहम् अरण्यं प्रविश्य हरिणादिषु कञ्चित् मारयित्वा अचिरात् एव आनेष्यामि । तावता भवान् काष्ठादीनि सङ्गृह्य अग्निं प्रज्वालयतु'' इति ।

एतत् श्रुत्वा मणिभूषणः भीतिं प्रदर्शयन् अवदत्- ''एतस्मिन् पर्वतप्रदेशे गुहासु घोरराक्षसाः निवसन्ति । किमर्थं वृथा अपायः स्वागतीक्रियते ?'' इति ।

तदा जीवदत्तः हसन् - ''रे भीरो ! भवतः मित्रं यक्षः राक्षसेभ्यः अपि घोरः । मन्त्रतन्त्रादिबलेन बहूनि दुष्कृत्यानि कृतवान् सः । तस्यैव समीपं गन्तुम् उद्युक्तयोः आवयोः राक्षसेभ्यः भीतिः किमर्थम् ?'' इति वदन् वृक्षाणां मध्ये अग्रे गतवान् ।

पञ्चदशनिमेषाभ्यन्तरे एकं हरिणं मारयित्वा स्कन्धे आरोप्य प्रत्यागतवान् जीवदत्तः । ततः तौ तस्य मांसम् अग्नौ दग्धुम् उद्युक्तौ जातौ । मांसगन्धः चतसृषु दिक्षु प्रसृतः ।

तावता विकृताकारा काचित् राक्षसी वृक्षशाखाः हस्तेन अपसारयन्ती - ''अहो मानवगन्धः ! अहो मानवगन्धः !'' इति वदन्ती तत्र आगतवती ।

आगच्छन्तीं राक्षसीं दृष्ट्वा खड्गवर्मा कोषतः खड्गम् अपनीतवान् । तं निवारयन् जीवदत्तः राक्षसीम् उद्दिश्य - ''मानवगन्धेन सह अत्र हरिणमांसगन्धः अपि अस्ति । भवती वस्तुतः राक्षसी, उत राक्षसवेषधारिणी यक्षी ?'' इति



अपृच्छत् ।

''भवान् कः ? मानवः सन् अपि भवान् राक्षसीं मां दृष्ट्वाऽपि भीतः न भवति खलु ? कथम् एतत् ? माम् एव प्रश्नं पृच्छन् अस्ति अपि !!'' इति अवदत् राक्षसी ।

जीवदत्तः स्वस्य मन्त्रदण्डं राक्षस्याः शिरसि स्थापयित्वा अवदत् - ''अये राक्षसि ! इदानीम् अवगतं खलु - वयं सामान्यमानवाः उत असामान्याः इति ?'' इति ।

राक्षस्याः शरीरतः स्वेदधारा प्रवाहरूपेण निर्गता । सा दैन्येन अवदत् - ''अहो ! भवन्तौ मानवौ न सर्वथा । प्रायः यक्षौ एव भवन्तौ । मम पुत्रौ बन्धीकृत्य भवन्तौ एव यक्षपर्वतं नीतवन्तौ प्रायः । अहं तु वृद्धा जाता अस्मि । यक्षपर्वते शिलाः भञ्जयित्वा भवतां कृते सुवर्णमण्यादीनां निष्कासनं कर्तुं न शक्नोमि । मम शरीरे तावती शक्तिः नास्ति । अतः तत्र न नेतव्या कृपया'' इति ।

''भवत्याः मारणं बन्धनं वा आवयोः उद्देशः न । भवत्याः कथनात् ज्ञायते यत् भवती यक्षपर्वतविषये अधिकं जानीयात् इति । आवाम् अपि यक्षपर्वतं गच्छन्तौ स्वः । तत्र नौका दृश्यते खलु ? तस्याम् अस्ति कश्चन यक्षः । अतः यक्षपर्वतसम्बन्धिनः विषयान् अत्र मा वदतु । भवत्याः गुहां गच्छाव । तत्र वार्तालापं करवाव'' इति अवदत् जीवदत्तः ।

''अयि वीर ! मम गुहा अनतिदूरे एव अस्ति । तत्र मम पतिः अपि अस्ति । यक्षपर्वतविषये अधिकान् अंशान् ज्ञापयितुं सः एव समर्थः'' इति अवदत् राक्षसी ।

राक्षसी इदानीम् अपि भयेन कम्पमाना



आसीत् । अल्पे एव काले सा तं स्वगुहां नीतवती । गुहायाः मुखद्वारे एव कश्चन महाकारकः राक्षसः शिलायाः उपरि उपविश्य श्रान्तिं निवारयन् आसीत् ।

राक्षस्या सह आगच्छन्तं जीवदत्तं दृष्ट्वा राक्षसः झटिति उत्थाय - ''अहो हो, कश्चन मानवः भवत्या सह ! एषः निर्भयतया भवत्या सह आगच्छन् अस्ति खलु ? कः एषः ?'' इति अपृच्छत् ।

तदा राक्षसी पत्युः समीपं गत्वा तस्य कर्णस्य समीपे मुखं नीत्वा मन्दस्वरेण - ''बुभुक्षावशात् एतं खादितुं प्रयत्नः न करणीयः भवता । एतस्य हस्ते महिमशाली दण्डः अस्ति । एषः एतस्य मित्रं च मिलित्वा एकं यक्षं बन्धीकृतवन्तौ स्तः । सः यक्षः इदानीं नौकायाम् अस्ति'' इति अवदत् ।

राक्षसः जीवदत्तम् आश्चर्येण पश्यन् -



"भोः मानव ! मम पत्नी यत् वदति तत् किं सत्यम् ? सा कदाचित् उन्मत्ता इव व्यवहरति । अतः पृच्छ्यते मया" इति अपृच्छत् ।

जीवदत्तः मन्दहासं प्रकटयन् अवदत् - "भवतः पत्न्या यत् उक्तं तत् सत्यम् एव । मया श्रुतं यत् यक्षः भवतः पुत्रौ बन्धीकृत्य यक्षपर्वतं नीतवान् इति । किं भवान् यक्षपर्वत-विषये अधिकं विवरणं जानाति ?" इति ।

राक्षसः शिरः कम्पयित्वा क्षण-कालानन्तरम् अवदत् - "यक्षपर्वतस्य तत्परिसरवर्तिप्रदेशानां च अधिपतिः अस्ति मणिरञ्जितः । यक्षराजः बहोः कालात् पूर्वम् एव तम् एतस्य प्रदेशस्य अधिपतिं कृतवान् आसीत् । मणिरञ्जितः महादुष्टः पापी च । तेन यानि पापानि कृतानि तानि वर्णयितुम् एव अशक्यानि" इति ।

"सः महादुष्टः पापी च इति अहम् अपि जानामि । मत्सम्बद्धयोः देशयोः राजकुमार्यौ अपहृतवान् अस्ति सः । किं तस्य सकाशे शिलामयः कोऽपि रथः अस्ति ?" इति अपृच्छत् जीवदत्तः ।

"आम् ! पर्वतस्य शिलानां द्वारा एव स च रथः निर्मितः इति श्रूयते" इति अवदत् राक्षसः ।

जीवदत्तः ततः प्रत्यागच्छन् राक्षसीम् उद्दिश्य - "मानवगन्धम् आघ्राय भवती मत्समीपम् आगता । मानवमांसं तु न प्राप्तं भवत्या । अतः आगच्छतु मया सह । हरिणमांसं दास्यामि । आतृप्ति तत् खादितुम् अर्हति भवती" इति अवदत् ।

अल्पे एव काले जीवदत्तः राक्षस्या सह प्रत्यागतः । एतत् दूरात् एव दृष्ट्वा भीत्या कम्पमानः यक्षः खड्गवर्माणम् उद्दिश्य - "अहो, किम् एतत् ! भवतः मित्रं कयाचित् राक्षस्या सह आगच्छति खलु ?" इति ।

"प्रायः सा भवन्तं कवलीकर्तुम् एव आगच्छन्ती स्यात्" इति उक्तवान् खड्गवर्मा ।

"एतत् तु नितराम् अन्याय्यम् । मणिरञ्जितः मम स्वामी । तस्य आज्ञायाः पालनं मम धर्मः । तदवसरे यदि मया किमपि कृतं स्यात् तर्हि तस्य फलभागी मम स्वामी एव । मया तु स्वबुद्ध्या किमपि अहितं न कृतं कस्यापि । तथापि मां राक्षस्यै किमर्थं यच्छन्ति भवन्तः ?" इति भीत्या एव अपृच्छत् मणिभूषणः ।

एतत् दूरात् एव श्रुतवान् आसीत् जीव-दत्तः । सः समीपम् आगत्य मणिभूषणम् अवदत् - "किम् एतावता एव भवान् भीतः ?

यदि खड्गवर्मा अहं च भवतः स्वामिनं जितवन्तौ न भवेम तर्हि राक्षससेना आगत्य भवतः सर्वान् खण्डीकृत्य खादिष्यति । एतदर्थं महती राक्षससेना सिद्धा जाता अस्ति । भवतां नाशः निश्चितः'' इति ।

''राक्षससेना !!'' इति स्वगतं वदन् मणिभूषणः मूर्च्छां गतः इव । तस्य मुखं निस्तेजस्कं जातम् ।

''आम्, राक्षससेना एव'' इति मणिभूषणम् उक्त्वा जीवदत्तः राक्षसीं दृष्ट्वा - ''सङ्कोचः कोऽपि करणीयः नास्ति । यावत् आवश्यकं तावत् मांसं नयतु । सहस्राधिक-राक्षसानां सेनायाः नेतारं महोग्रनेत्रं वदतु यत् यक्षपर्वतस्य आक्रमणार्थं गमनाय इतोऽपि कश्चन कालः अस्ति इति । सर्वे सन्नद्धाः तिष्ठन्तु'' इति अवदत् ।

राक्षसी अङ्गीकारपूर्वकं शिरः चालयन्ती अपेक्षितप्रमाणेन मांसं स्वीकृत्य गुहां प्रति गतवती । ततः ते त्रयः भोजनं कृत्वा वृक्ष-च्छायायां शिलायाः उपरि शयनं कृतवन्तः ।

मणिभूषणः तयोः दूरे एव शयनं कृतवान् । शयनात् पूर्वं द्वित्रवारं नौकां दृष्टवान् आसीत् सः । पौनःपुन्येन तेन कृतं नौकायाः दर्शनं दृष्टवान् आसीत् खड्गवर्मा । सः जीवदत्तम् अवदत् - ''एषः मध्यरात्रे नौकायाम् उपविश्य पलायनं कुर्यात् इति सन्देहः मम । अतः एतस्मिन् विशेषदृष्टिः भवतु'' इति ।

जीवदत्तस्यापि मनसि एषः सन्देहः आसीत् एव । अतः सः शयनं कृत्वा निद्राप्राप्तिम् अभिनयन् मणिभूषणस्य व्यवहारम् एव परिशीलयन् आसीत् ।

मध्यरात्रे एकः भल्लूकः, एकः वृकः च तत्र आगतौ । ताभ्यां हरिणमांसगन्धः आघ्रातः प्रायः । तौ गन्धम् आजिघ्रन्तौ मणिभूषणसमीपं गतवन्तौ । एतत् ज्ञातवान् खड्गवर्मा उत्थाय उपविश्य लघुशिलाखण्डं क्षिप्तवान् । तेन तौ धावितवन्तौ ।

पार्श्वे धावनशब्दं श्रुत्वा मणिभूषणः जागरितः जातः । परितः दृष्टिं प्रसारयन् सः महत्या भीत्या अवदत् - ''भो भोः, खड्गवर्मवर्य ! जीवदत्तार्य ! उत्तिष्ठताम् । राक्षससेना इतः एव आगच्छन्ती अस्ति'' इति ।

(अग्रिमसञ्चिकायां समाप्तिः)



# प्रसिद्धिः

श्रीपतिः रामपुरस्य भूस्वामी । गौरीशङ्करः तस्य सहायकः आसीत् । सः भूस्वामिनः सर्वाणि कार्यालयीयकार्याणि दक्षतया निर्वहति स्म । कदाचित् सः आकस्मिकमरणं प्राप्तवान् । अतः भूस्वामिना अपरस्य सहायकस्य अन्वेषणं करणीयम् अभवत् ।

भूस्वामिनः पत्न्याः निमित्तं पाकं करोति स्म रुक्मिणी । सा कदाचित् भूस्वामिनं द्रष्टुं गतवती । भूस्वामी पृष्टवान् – ''किमर्थम् आगतम् ? किं किमपि वक्तव्यम् अस्ति ?'' इति ।

तदा रुक्मिणी अवदत् – ''भवतः पत्न्याः मुखात् मया ज्ञातं यत् भवान् कश्चित् सहायकम् अन्विष्यन् अस्ति इति'' इति ।

''आम् । कार्यालयीयकार्याणां निर्वहणार्थं दक्षस्य कस्यचित् आवश्यकता अस्ति एव । अतः तादृशस्य अन्वेषणं कुर्वन् अस्मि अहम्'' इति उक्तवान् भूस्वामी ।

''श्रीमन् ! मम पुत्रयोः विषये वक्तुम् अहम् आगता । तौ गौरीशङ्करवर्योऽपि जानाति स्म । उभौ अपि बुद्धिमन्तौ कार्यदक्षौ च'' इति उक्तवती रुक्मिणी ।

''भवत्याः पुत्रौ मया अपि द्वित्रवारं दृष्टौ एव । किन्तु मम कार्यार्थं तु सुविख्यातस्य कस्यचित् आवश्यकता अस्ति । भवत्याः पुत्रौ तादृशौ न खलु ?'' इति उक्तवान् भूस्वामी ।

तदा रुक्मिणी धैर्येण एव उक्तवती – ''भवतः सहायकपदे यस्य नियुक्तिः भवति सः पदबलात् प्रसिद्धः भवति एव । प्रसिद्धिः नियुक्त्यनन्तरं प्राप्यते'' इति ।

अनन्तरदिने एव भूस्वामी रुक्मिण्याः पुत्रयोः अन्यतरं सहायकपदे नियुक्तवान् एव ।



वेताल-कथा

# निन्दा-राक्षसः

घोरान्धकारः । भयजनिका रात्रिः सा । शृगालादीनां रवः दूरतः श्रूयते स्म । मेघाः उच्चैः गर्जनं कुर्वन्ति स्म । विद्युतः तैक्ष्ण्येन दृष्टिशक्तिं पीडयन्ति स्म । तथापि त्रिविक्रमः स्वस्य प्रयत्नं त्यक्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः मौनेन यथापूर्वं श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवतः लक्ष्यं किं वा स्यात् ? किमर्थं वा भवान् एतादृशं महान्तं परिश्रमं करोति ? मध्यरात्रम्, अन्धकारः, पिशाचादि-रवः, मेघगर्जनम् इत्यादिषु एकम्



अपि भवति भीतिं न जनयति ? किमर्थं वा भवान् स्वप्राणान् अपायगर्ते पातयितुम् इच्छति ? कः वा भवन्तम् एतादृशे कार्ये प्रवर्तितवान् ? अन्ते फलप्राप्तिसमये सः स्वस्य उद्देशं विस्मृतवान् चेत् भवतः सर्वोऽपि अयं प्रयासः व्यर्थः खलु ? अविचिन्तितव्यवहारः किं शोभते ? पूर्वम् अरुणानामिका काचित् महर्षितः वरं प्राप्यापि अन्ते तं वरं स्वनिमित्तं न उपयुक्तवती, प्रत्युत अन्यस्य निमित्तं उपयुक्तवती अविचिन्त्य । तस्याः कथा अविवेकव्यवहारतः भवन्तं निवर्तयेत् । अतः तस्याः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं गङ्गा नाम वाचाटा कोपशीला निन्दाप्रवृत्तिमती काचित् गृहिणी आसीत् । अन्यनिन्दार्थं प्राप्तम् एकम् अपि अवकाशं सा न परित्यजति स्म । तस्याः पतिः बलरामः । सः पत्न्याः कोपशीलतां शान्ततया सहते स्म । तयोः पुत्रः भीमः । सोऽपि पितृसदृशः सहनशीलः एव । अतः माता निरन्तरं तर्जयति चेदपि प्रतिवचनं किमपि न वदति स्म सः ।

एकदा भीमः मातुः निमित्तं शाटिकां क्रेतुं गङ्गापुरं प्रति गतवान् । गङ्गापुरे कौशेयशाटिकानिर्माणं विशेषतः प्रचलति स्म । जनाः कौशेयशाटिकां क्रेतुं तं ग्रामं गच्छन्ति स्म बहुधा । गङ्गा तस्मात् एव ग्रामात् एकां कौशेयशाटिकां क्रेतुम् इच्छति स्म । अतः सा अपेक्षितं वर्णं विन्यासं च सूचयित्वा पुत्रं गङ्गापुरं प्रति प्रेषितवती ।

गङ्गापुरं गत्वा भीमः बहून् शाटिकानिर्मातॄन् दृष्टवान् । किन्तु मात्रा यादृशी शाटिका सूचिता आसीत् तादृशी तेन कुत्रापि न लब्धा एव । शाटिकाम् अक्रीत्वा गतं चेत् किं भवेत् इति सः जानाति स्म । अवाच्यशब्दैः मातुः निन्दनं श्रोतुं न इच्छति स्म सः । अतः किङ्कर्तव्यतामूढः सः नद्याः तीरे कस्यचित् वृक्षस्य अधः उपविष्टवान् ।

ततः अनतिकाले कासाञ्चित् तरुणीनां गणः तत्र आगतः । ताः तरुण्यः प्रतिदिनं स्नानार्थं नदीम् आगच्छन्ति स्म । स्नानं समाप्य प्रतिगमनसमये जलं नयन्ति स्म ताः ।

तासु अन्यतमा अरुणा । सा तर्जनस्वरेण भीमं पृष्टवती - ''रे, किमर्थम् उपविष्टम् अत्र ? वयं बालिकाः अत्र स्नानं कुर्मः इति किं भवान् न जानाति ?'' इति ।

एतत् श्रुत्वा म्लानवदनः भीमः स्वस्य

आगमनस्य उद्देशं, निराशतायाः कारणं च ताम् उक्तवान् ।

सर्वं श्रुत्वा अरुणा उच्चैः हसन्ती उक्तवती - ''कीदृशी अविवेकिनी भवतः माता ? शाटिकां क्रेतुं तया स्वयम् आगन्तव्यम् आसीत्, अन्या महिला वा प्रेषणीया आसीत् । सा तु सर्वथा लौकिकज्ञानरहितं भवन्तं प्रेषितवती अस्ति । तथापि अलं चिन्तया । अहं भवतः साहाय्यं करिष्यामि । भवान् ग्रामं प्रविश्य शिवराजस्य गृहम् अन्विष्य तत्र मम प्रतीक्षां करोतु । अचिरात् एव अहं स्नानं समाप्य तत्र आगमिष्यामि । भवतः मात्रे यादृशी रोचेत तादृशीम् एव शाटिकाम् अहं चित्वा दास्यामि । भवतः माता भवन्तं यथा प्रशंसेत् तथा करिष्यामि'' इति ।



भीमः ततः निर्गत्य शिवराजस्य गृहं प्राप्य तत्र प्रतीक्षां कृतवान् । अल्पे एव काले अरुणा तत्र आगतवती । 'भवतः माता कीदृशी अस्ति ?' इति भीमं पृष्टवती । ततः एकां सामान्यां शाटिकाम् आनीय भीमाय दत्तवती च ।

''गृहं गत्वा एतां शाटिकां मात्रे ददातु । एतादृशी एव शाटिका राज्ञया अपि वर्षात् पूर्वं क्रीता आसीत् इति आपणिकः उक्तवान् इति वदतु । उभे महिले समानाम् आसक्तिं वहतः इति तु आश्चर्याय इति आपणिकः उक्तवान् इत्यपि वदतु । एतेन भवतः माता सन्तुष्टा भविष्यति । राज्ञ्या सह तोलनं तस्यै हर्षं ददाति । अतः भवतः माता भवता नीतां शाटिकां दृष्ट्वा निश्चयेन तुष्टा भविष्यति'' इति उक्तवती अरुणा ।

भीमः ग्रामं प्रत्यागत्य अरुणा यथा उक्तवती तथैव मातरम् उक्तवान् । तत् श्रुत्वा गङ्गा नितरां सन्तुष्टा । भीमं बहुधा श्लाघितवती सा ।

भीमः पितरं प्रवृत्तं सर्वं निवेदितवान् । तदा पिता चिन्तितवान् - 'यदि अरुणा मम पुत्रं परिणयेत् तर्हि गङ्गायाः स्वभावं परिवर्तयितुं शक्नुयात्' इति ।

पितुः सूचनायाः अनुगुणम् अनन्तरदिने भीमः पुनरपि गङ्गापुरं गतवान् । अरुणायाः प्रतीक्षां कृतवान् च । अल्पे एव काले मिलिता अरुणा पृष्टवती - ''किं भवतः मात्रे सा शाटिका अरोचत ? सा भवन्तं तर्जितवती तु न स्यात् खलु ?'' इति ।

''मम मात्रे सा शाटिका अरोचत बहुधा । मया अन्यस्य कार्यस्य निमित्तम् आगतम् अद्य ।



किं भवती मां परिणयेत् ?'' इति पृष्टवान् भीमः ।

''विवाहः ज्येष्ठैः खलु निश्चीयते ? अतः भवता मम मातापितरौ प्रष्टव्यौ एतद्विषये'' इति उक्तवती अरुणा ।

''तत् तु करिष्यते एव । किन्तु ततः पूर्वम् अहं भवत्याः आशयं ज्ञातुम् इष्टवान् । अतः एव अद्य आगतं मया'' इति अवदत् भीमः ।

अरुणा क्षणकालं विचिन्त्य अवदत् - ''भवान् सरलः मृदुस्वभावः च । एषः स्वभावः मह्यम् अरोचत । अतः शाटिका-चयने मया भवतः साहाय्यं कृतम्'' इति ।

ततः भीमः स्वस्य मातुः स्वभावादिकं निवेद्य अपृच्छत् - ''किं भवती स्वचातुर्येण मम मातुः स्वभावे परिवर्तनम् आनेतुं शक्नुयात् ?'' इति ।

अरुणा किञ्चित् चिन्तितवती । तया महर्षिः विलम्बनः स्मृतः । देशसञ्चारं कुर्वन् कदाचित् सः गङ्गापुरम् अपि आगतवान् आसीत् । नदीतटे गच्छन् सः स्खलनात् पतितवान् । पादे अस्थिव्यावर्तनं प्राप्य सः उत्थातुं न शक्तवान् । तदा नदीं स्नानार्थम् आगताः सर्वाः तरुण्यः तस्य उपहासं कृतवत्यः । किन्तु अरुणा अग्रे गत्वा तस्य साहाय्यं कृतवती । एतस्मात् सन्तुष्टः ऋषिः अवदत् - ''भवत्याः सेवया अहं सन्तुष्टः अस्मि । अपेक्षितं याचतु । ददामि'' इति ।

अरुणा झटिति निर्णेतुं न शक्तवती । अतः सा समयावकाशं प्रार्थितवती । तदा ऋषिः अवदत् - ''यदा किमपि साहाय्यम् आवश्यकं तदा नेत्रे निमील्य त्रिवारं मम नाम उच्चारयतु । अहं तदा प्रत्यक्षीभूय वरं दास्यामि'' इति ।

अरुणा एतत्सर्वं भीमम् उक्त्वा - ''सामान्येन जनेन भवतः मातुः स्वभावस्य परिवर्तनं कर्तुं न शक्यम् इति भाति । अतः महर्षेः विलम्बनस्य साहाय्यस्वीकारः एव वरं स्यात्'' इति उक्त्वा महर्षेः नाम त्रिवारम् उच्चारितवती ।

विलम्बनः झटिति प्रत्यक्षीभूय अरुणायाः मुखात् भीमस्य वृत्तान्तं समग्रतया श्रुतवान् । ततः सः भीमं अवदत् - ''वत्स ! आगच्छतु, भवतः मात्रा मेलयतु माम्'' इति ।

ततः तौ ततः निर्गत्य भीमस्य गृहं प्राप्तवन्तौ । मञ्चे शयानां गङ्गां महर्षिः भिक्षां याचितवान् - ''अम्ब ! भिक्षां ददातु'' इति ।

तदा गङ्गा झटिति उत्थाय - ''किं भिक्षा-याचनार्थम् आगतं भवता ? कोऽयं क्रमः

भवतः ?'' इति वदन्ती अवाच्यशब्दैः संन्यासिनः निन्दनम् आरब्धवती ।

''अम्ब ! यदि इष्यते तर्हि भिक्षां ददातु । अन्यथा - 'प्रतिगच्छतु' इति वदतु । विना कारणम् उक्ताः निन्दाशब्दाः राक्षसरूपेण परिवर्तिताः सन्तः भवतीं पीडयिष्यन्ति'' इति शान्ततया अवदत् महर्षिः ।

''आ बाल्यात् मम एषैव प्रवृत्तिः । मातापितरौ अपि मया एवम् एव तर्जितौ । पतिः पुत्रः चापि एवम् एव तर्ज्येते । अद्यावधि मया कोऽपि दुष्टपरिणामः न दृष्टः । एवं स्थिते किम् एतत् उच्यते भवता ?'' इति कोपेन एव पृष्टवती गङ्गा ।

''यदि मया कोऽपि अपराधः कृतः स्यात् तर्हि भवत्याः निन्दनं युज्येत । किन्तु कारणं विना यदि भवती मां मादृशम् अन्यं कञ्चित् वा यदि तर्जयेत् तर्हि तानि निन्दावचनानि भवत्याः सकाशम् एव प्रत्यायान्ति । एतत् भवत्या न विस्मर्तव्यम् । इतःपरं भवती कमपि यदि विना कारणं तर्जयेत् तर्हि निन्दावचनानि राक्षसरूपेण प्रत्यक्षीभूय भवतीं पीडयिष्यन्ति'' इति अवदत् महर्षिः ।

तथापि गङ्गा महर्षेः निन्दनम् अनुवर्तितवती । तदा झटिति कश्चन राक्षसः तस्याः पुरतः प्रत्यक्षीभूय अवदत् - ''अहम् अस्मि निन्दा-राक्षसः । चतुर्भ्यः वर्षेभ्यः अहम् अवकाशं प्रतीक्षमाणः आसम् । अद्य महर्षेः अनुग्रहेण एवं रूपं धृत्वा उपस्थितः अस्मि । मया कस्य नाशनं करणीयम् इति झटिति वदतु । अन्यथा भवतीम् एव नाशयिष्यामि'' इति ।

एतत् दृष्ट्वा गङ्गा नितरां भीता । सा संन्यासिनः



पादौ गृहीत्वा क्षमायाचनं कुर्वती उक्तवती - ''महात्मन् ! मया प्रमादः कृतः । कृपया क्षन्तव्या अहम्'' इति ।

तदा महर्षिः अवदत् - ''राक्षसः भवत्याः प्रियम् एव कञ्चित् नाशयितुम् इच्छति । अतः गृहाङ्गणे स्थितम् आम्रवृक्षं नाशयतु इति तं वदतु । सः तं नाशयित्वा निर्गमिष्यति'' इति ।

गङ्गा तथैव उक्तवती । अतः राक्षसः आम्र-वृक्षं दग्ध्वा ततः अदृश्यः अभवत् । गङ्गा दीर्घं निश्श्वसितवती ।

तदा महर्षिः गम्भीरस्वरेण अवदत् - ''इतःपरं भवती कमपि विना कारणं न तर्जयेत् । यदि तर्जयेत् तर्हि निन्दाराक्षसः भवत्याः पुरतः प्रत्यक्षीभूय दण्डयिष्यति । यदि भवत्याः व्यवहारः उत्तमः भविष्यति तर्हि सः राक्षसः कदापि भवतीं न

पीडयिष्यति । गङ्गापुरे अरुणा नाम काचित् तरुणी अस्ति । सा बुद्धिमती विवेकिनी गुणवती च । तां स्नुषां करोतु । यदि भवती तस्याः विषये उत्तमव्यवहारं दर्शयेत् तर्हि सः निन्दाराक्षसः शक्तिहीनः सन् विलयं यास्यति । भवत्याः जीवनं च सुखमयं भविष्यति'' इति ।

एतदनन्तरम् अल्पे एव काले अरुणा-भीमयोः विवाहः यथाविधि सम्पन्नः ।

वेतालः एवं कथां समाप्य अवदत् – ''अये राजन् ! अरुणा मुनेः अनुग्रहस्य योग्यम् उपयोगं न कृतवती इति भाति मम । मुनेः वरस्य बलात् सा धनिककुलीयायाः स्नुषा भवितुम्, अपारम् ऐश्वर्यं प्राप्तुं, सुखम् अनुभवितुं वा अशक्ष्यत् । किन्तु सा तथा न कृतवती । स्वबान्धवानां हिताय अपि वरस्य उपयोगं न कृतवती, अपि तु सामान्यस्य भीमस्य निमित्तं कृतवती । किं तया युक्तं कृतम् ? किं सा अविवेकिनी न ? भीमस्य साहाय्यं कुर्वत्या तया किं वा साधितम् ? एवं मम अनेके सन्देहाः । एतेषां सन्देहानां समुचितम् उत्तरं यदि भवान् जानन् अपि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् – ''विवाहानन्तरं पुत्री सुखेन भवतु इति सर्वे मातापितरः इच्छन्ति । अरुणायाः मातापित्रोः अपि तादृशी इच्छा आसीत् एव । अतः अरुणा तयोः इच्छायाः पूरणं कुर्वती स्वसुखम् अपि साधितवती । तरुणाः प्रायः सहनावन्तः न भवन्ति । किन्तु भीमः सहनशीलः गुणवान् च । अतः अरुणा तं परिणेतुम् इष्टवती । भाविन्याः श्वश्र्वाः स्वभावस्य परिवर्तनार्थं वरस्य उपयोगं कृतव च । वरबलात् धनं सम्पादयितुं शक्य आसीत् । किन्तु ततः सुखं प्राप्येत इति कः निश्चयः ? अतः अरुणा सुखम् एव प्राप्तुं निश्चितवती । बुद्धिमत्ता यदि स्यात् तर्हि धनप्राप्तिः न क्लेशाय खलु ? अतः तस्याः निर्णयः योग्यः बुद्धिमत्तापूर्णः च'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

कानिचन स्थानानि स्ववैशिष्ट्यस्य कारणतः प्रसिद्धानि भवन्ति । तेषां स्थलानां प्रसिद्ध्यर्थं ये अंशाः कारणीभूताः आसन् तेषां विषये अधः प्रश्नाः सन्ति । उत्तरं दातुं प्रयतन्ताम् -

१. जपानदेशः उच्यते - 'प्रथमसूर्यकिरणस्पर्शार्हः देशः' इति । भारतस्य कं भागं सूर्यकिरणाः ऐदम्प्राथम्येन स्पृशन्ति ?
२. कस्मिन् राज्ये मूलजनजातीयानां सङ्ख्या अधिका अस्ति ?
३. कस्मिंश्चित् राज्ये विशिष्टः नृत्यप्रकारः अस्ति । कविः रवीन्द्रनाथठागोरः तं नृत्यप्रकारं देशस्य अन्येषु भागेषु प्रचारितवान् । तस्य राज्यस्य नाम किम् ?
४. कस्मिन् राज्ये बौद्धमतीयानां मठाः आधिक्येन सन्ति ?
५. यदा आंग्लाः देहलीं राजधानीं कृत्वा शासनं कुर्वन्ति स्म तदा ग्रीष्मकालीनराजधानी अन्या भवति स्म । कस्य राज्यस्य कस्मिन् नगरे एषा अस्ति ?
६. जगति ऐदम्प्राथम्येन कस्मिन् राज्ये प्रजाप्रभुत्वपद्धत्या चितः साम्यवादि(कम्यूनिष्ट्)-सर्वकारः शासनम् अकरोत् ?
७. फ्रान्स्देशीयः लीकाबोसियरः कस्यचित् नगरस्य संरचनां कल्पितवान् । तत् नगरं राज्यद्वयस्य राजधानी अस्ति । तस्य नगरस्य नाम किम् ? तयोः राज्ययोः नाम च किम् ?
८. कुम्भमेला चतुर्षु स्थलेषु प्रचलति । कुम्भमेलाद्वयं तु एकस्मिन् राज्ये एव प्रचलति । तस्य नाम किम् ?

*(उत्तराणि अग्रिमे मासे)*

### *'जनवरी'मासस्य प्रश्नानाम् उत्तराणि*

१. नेताजी सुभाषचन्द्रबोसः ।
२. मगनलाल गान्धी 'सदाग्रह'पदं ( सत्कार्ये आस्था इत्यर्थः) सूचितवान् । तदेव पदं अल्पतया परिवर्त्य 'सत्याग्रह'पदं प्रयुक्तवान् महात्मा गान्धी ।
३. १९१६ तमे वर्षे लखनऊनगरे काङ्ग्रेस्-अधिवेशने ।
४. लाला लजपतरायः, बालगङ्गाधरतिलकः, बिपिनचन्द्रपालः च ।
५. १९०५ तमे वर्षे ।
६. १८५७ तमे वर्षे ।
७. १९२९ तमे वर्षे डिसेम्बर्मासस्य ३१ तमे दिनाङ्के लाहोरीये काङ्ग्रेस्-अधिवेशने ।
८. १९२८ तमे वर्षे, यस्य च नेता आसीत् जान् सैमन् । भारतीयनायकैः सह शासकीय-नियमानां विषये चर्चां कर्तुम् ।
९. १९४६ तमे वर्षे अगस्ट् २४ तमे दिनाङ्के ।
१०. बालगङ्गाधरतिलकः ।

# नागाल्याण्डीया जानपदकथा

*नागाल्याण्ड् पर्वतमयं राज्यम् । भारतस्य ईशान्यदिशि (उत्तरपूर्वयोः मध्ये) अस्ति एतत् राज्यम् । एतस्य उत्तरदिशि असमारुणाचल-प्रदेशौ स्तः । दक्षिणदिशि मणिपुरम् अस्ति । पश्चिमदिशि असमराज्यम् अस्ति । पूर्वदिशि मयन्मार् (पूर्वं तस्य नाम बर्मा इति आसीत्) अस्ति ।*

*एतस्य राज्यस्य विस्तीर्णं १६,५२७ चतुरस्रकिलोमीटर्मितम् । अत्रत्या जनसङ्ख्या च १७,८८६,३६ (२००१ तमवर्षस्य जनगणनायाः अनुगुणम्) एतत् राज्यं समुद्रतलात् १४९० मीटर्-उन्नतस्थले अस्ति ।*

*एतस्य राजधानी कोहिमा । एतत् १९६३ तमे वर्षे डिसेम्बर्मासस्य प्रथमे दिनाङ्के राज्यत्वं प्राप्नोत् । भारतस्य षोडशं राज्यम् एतत् । एतस्मिन् राज्ये प्राधान्येन इंग्लीष्, हिन्दी, नागामीसीभाषा च प्रयुज्यन्ते ।*

*नागापर्वतश्रेण्याम् अत्युन्नतं शिखरं सारामतीनामकम् । एतत् समुद्रतलात् ३८७७ मीटरोन्नतस्थले अस्ति । कोहिमा पर्वतस्थं नगरम् । अतः अत्र प्रकृतिसौन्दर्यं द्रष्टुं शक्यते विशेषतः ।*

*दिमापुरं समुद्रतलात् १९५ मीटर्-अधस्तनस्थले अस्ति । एतत् नागाल्याण्ड्-राज्यस्य प्रवेशद्वारायते ।*

## सुखेन अवसत् कोहिटः

नागाल्याण्ड्राज्ये झुन्हेबोटो कश्चन लघुग्रामः । तत्र चतुर्दशवर्षीयः विकलाङ्गः कोहिटः निवसति स्म । सः सर्वैः उपेक्षितः आसीत् । सर्वेऽपि स्वकार्येषु सदा व्यापृताः भवन्ति स्म । कोहिटः 'मौरुङ्ग'नामिकायां वसतिशालायां निवसति स्म अन्यैः बालैः सह । तस्य भोजनव्यवस्था कथमपि तत्र भवति स्म । सः कार्यम् अपि कर्तुम् इच्छति स्म । सः 'दियो'प्रभृतीन् कण्डोलान् च निर्मातुम् इच्छति



स्म । अरण्यं गत्वा मृगयाम् अपि कर्तुम् इच्छति स्म । किन्तु कोऽपि तं तत्सर्वं न बोधयति स्म ।

''रे निर्गच्छतु इतः'' इति तर्जयति स्म कण्डोलनिर्माता । कोहिटस्य छाया तदीय-कार्यशालायां पतिता चेदपि सः क्रुद्धः भवति स्म । कोहिटः निराशः सन् म्लानमुखतया ततः निर्गच्छति स्म ।

कदाचित् सः '*दियो*' आयुधं तीक्ष्णीकुर्वन्तं नेडेलियं दृष्टवान् । सः तत्समीपं गत्वा पृष्टवान् - ''किं भवान् आयुधनिर्माणं माम् अपि बोधयेत् ?'' इति ।

''न इदानीम् । मम समयः नास्ति इदानीम् । भवान् इव कार्यरहितः न अहम्'' इति उक्तवान् नेडेलियः ।

एतत् श्रुत्वा कोहिटः नितरां कुपितः । सः ग्रामात् बहिः गत्वा वेणुगुच्छस्य अधः उपविश्य क्रोधेन मुष्ट्या वायुं प्रहृतवान् ।

'गौरवावहं किमपि करणीयं मया । केनचिदपि नागापुरुषेण यादृशं न कृतं तादृशं किमपि विशिष्टं कार्यं करणीयं मया' इति सः निश्चितवान् । 'किं कृतं चेत् ग्रामीणानाम् आदरः प्राप्येत' इति बहुधा अचिन्तयत् सः ।

तावता महिलानां गानध्वनिः श्रुतः । ताः '*खाङ्ग*' मध्ये घटान् स्थापयित्वा सुदूरे पर्वतस्य मूलभागे प्रवहन्तीतः नदीतः जलम् आनेतुं गच्छन्त्यः आसन् । एवं प्रतिदिनं करणीयं भवति स्म ताभिः । एतत् दृष्टवतः कोहिटस्य मनसि विचारः आगतः - 'जलार्थं मया किमपि करणीयम्' ।

तस्मिन् ग्रामे जलस्य महती समस्या आसीत् । 'यदि अहम् एकं कूपं निर्मातुं शक्नुयां तर्हि ग्रामीणानां महान् श्रमः निवारितः भवेत् ।



तदा ते माम् उपेक्षया द्रष्टुं न अर्हन्ति । अतः अहं कूपस्य खननं करिष्यामि' इति निर्णीय सः कूपखननम् आरब्धवान् । किन्तु एतत् सः ग्रामीणान् न उक्तवान्, यतः ते तत् कार्यं निषेधन्तः निराशतां जनयेयुः इति तस्य भीतिः आसीत् ।

कूपखननकार्यं सरलं न आसीत् । तस्य वयसः अननुगुणम् अपि आसीत् तत् । तथापि कोहिटः निरन्तरं कार्यं कृतवान् ।

वर्षाणि गतानि । कोहिटः यावत् दृढकायः तरुणः जातः तावता कूपखननकार्यम् अपि समाप्तम् । एकस्मिन् दिने कूपे जलधारा उद्गता । कोहिटस्य मुखे तृप्तिसूचकः मन्दहासः उत्पन्नः । सः रोमाञ्चितः अभवत् ।

अल्पे एव काले तस्य कूपः उपयोगार्थं सिद्धः जातः । सः '*चुङ्गास्*' नामकं जलपात्रं गृहीत्वा तेन स्वकूपस्य जलम् आतृप्ति पीतवान् ।

# शिरसः सङ्ग्रहणम्



प्राचीने काले नागाजनानां मुख्यं कार्यम् आसीत् शिरसः सङ्ग्रहणम् । यस्य समीपे एकम् अपि शिरः न भवति स्म तस्य गौरवम् एव न आसीत् समाजे । तादृशं जनाः उपहसन्ति स्म । कन्याप्राप्तौ अपि तेन कष्टम् अनुभूयते स्म । नागाजनाः पूर्वं मानवान् मारयित्वा तेषां च शिरः प्रशस्तिफलकरूपेण गृहे साभिमानं संरक्षन्ति स्म । तत् शिरः स्वच्छीकृत्य रक्ष्यते स्म तैः ।



अनन्तरदिने महिलाः गायन्त्यः यदा नदीं प्रति गच्छन्त्यः दृष्टाः तदा सः ताः उक्तवान् - "जलार्थं तावद्दूरं गमनेन किम् ? मम कूपम् आगच्छन्तु । स्फटिकवत् निर्मलं जलम् अस्ति तत्र" इति ।

आदौ ताः तस्य वचने न विश्वसितवत्यः । अनन्तरं दर्शनकुतूहलवशात् ताः तम् अनुसृतवत्यः । कूपे निर्मलं जलं दृष्ट्वा ताः नितरां सन्तुष्टाः । अचिरात् एव ग्रामे कूपवार्ता प्रसृता । जनानां दृष्ट्या कोहिटस्य महत्त्वं वर्धितम् ।

किन्तु एतत् दीर्घकालम् न अनुवृत्तम् । किन्नराः तं कूपं प्रति आगमनम् आरब्धवन्तः । ते चन्द्रोदयस्य अनन्तरम् आगच्छन्ति स्म, कूप्यां स्नात्वा विहारं च कृत्वा प्रकाशोद्गमतः पूर्वं निर्गच्छन्ति स्म । एतस्मात् जलस्य मलिनता आरब्धा । जले पुष्पाणि, पक्षपिञ्छाः इत्यादयः दृश्यन्ते स्म ।

ग्रामीणाः कोहिटं तर्जितवन्तः - "कः कूपं मलिनं कुर्वन् अस्ति ?" इति । कोहिटः किं वा जानाति ? मालिन्यं कथं सम्भवति इति सः सर्वथा न जानाति स्म । 'अहं न जानामि' इत्येतस्मिन् कोहिटस्य वचने ग्रामीणानां विश्वासः

न आसीत् ।

''कूपस्य जलस्य उपयोगाय अन्येभ्यः अनुमतिं दत्तवान् अस्ति भवान् । अतः एव एवं जातम् । यदि एतत् एवम् एव अनुवर्तेत तर्हि वयं भवन्तं ग्रामात् निष्कासयिष्यामः'' इति तर्जितवन्तः ते ।

'एतद्विषये मया किमपि करणीयम् एव' इति कोहिटः निश्चितवान् । ग्रामीणानां विश्वासं सम्पादयितुं तेन कानिचन वर्षाणि यावत् अखण्डपरिश्रमः कृतः आसीत् । सः विश्वासः अल्पेन प्रसङ्गेन शुष्कः जायमानः अस्ति यत् तत् कथं सहेत सः ?

अतः सः रात्रौ कूपस्य पार्श्वे निलीय स्थितवान् । किन्नरयुगलानि यथापूर्वं तत्र आगतानि । किन्नराः स्नानार्थं निमज्जनात् पूर्वं पक्षौ अपनीय पार्श्वे स्थापितवन्तः । 'अहो, एते एव अपराधिनः । ग्रामे मम अपख्यातिः या जायमाना अस्ति तस्य कारणम् एते एव । एतान् योग्यां नीतिं बोधयिष्यामि' इति चिन्तयित्वा सः विनाशब्दं गत्वा पक्षयुगलं स्वीकृत्य अन्धकारे अदृश्यः अभवत् ।

यदा सूर्यस्य प्रथमकिरणाः भूमिम् अस्पृशन् तदा ते कूपात् बहिः आगत्य पक्षादिकं धृत्वा ततः प्रस्थितवन्तः । किन्तु एका किन्नरी पक्षौ न प्राप्तवती । सा अन्यान् उक्तवती – ''मम पक्षौ न दृश्येते । तयोः अन्वेषणं करोमि । कृपया क्षणं प्रतीक्ष्यताम्'' इति । किन्तु किन्नराः तस्याः वचने अवधानम् अयच्छन्तः ततः निर्गताः । दुःखेन क्रन्दन्ती एकाकिनी किन्नरी तत्र स्थितवती ।

कोहिटः गुल्मानां मध्यतः बहिः आगत्य अवदत् – ''इतः गन्तुम् अवकाशं न ददामि भवत्यै । तेन अन्ये किन्नराः स्वदोषं जानन्तु नाम । इतः परं तेषां पीडा अत्र न भवेत्'' इति क्रोधेन उक्तवान् कोहिटः ।

पक्षौ याचन्ती किन्नरी बहुधा रुदितवती । ''मम पक्षौ ददातु कृपया'' इति प्रार्थितवती पुनः पुनः । एतस्मात् कोहिटस्य हृदये करुणा उत्पन्ना । किन्नरी सुन्दरी आसीत् एव । अतः कोहिटः तां पृष्टवान् – ''किं भवती मां

## जातयः

नागाल्याण्ड् विविधजनजातीयानां भूमिः । एतस्मिन् राज्ये चतुर्दश वनजातीयाः प्राधान्येन दृश्यन्ते । तासु अङ्गमी, ओ, चाकेसङ्ग, चाङ्ग, खेमुङ्गम्, कोन्याक्, लोथा, फोम् इत्यादयः प्रमुखाः । एकैकस्याः वनजातेः अपि एकैका परम्परा, एकैकः सम्प्रदायः, एकैका भाषा च । वेषः, भूषा, आभरणानि, उष्णीषं च प्रतिजाति भिद्यते । एताः जातयः विविधासु उपजातिषु विभक्ताः सन्ति अद्य ।





कोहिटः तां परिणीय तया सह ग्रामं गतवान् । तौ स्ववासार्थम् उत्तमं कुटीरं निर्मितवन्तौ । वर्षाणि गतानि । सा विविधपाकान् ज्ञातवती । 'झुयो' 'रूही' इत्यादीनां सज्जीकरणम् अपि ज्ञातवती । नागागीतानि अपि ज्ञातवती । किन्तु एकम् एव दुःखं नाम मेघगृहस्य सम्पर्कः नास्ति इति ।

एकदा कोहिटः कार्यार्थं गृहात् बहिः गतः आसीत् । तदा किन्नरी गृहे सर्वत्र पक्षौ अन्विष्टवती । किन्तु कुत्रापि तौ तया न प्राप्तौ । 'तौ कुत्र स्याताम् ? यत्र प्रवेशं कर्तुम् अहम् जुगुप्सां प्राप्नुयां तादृशे स्थले एव स्यातां तौ । तादृशं स्थलं कुत्र अस्ति ?' इति तया बहुधा चिन्तितम् ।

गृहे एकं कुक्कुटगृहम् आसीत् । ततः सर्वदा दुर्गन्धः निर्गच्छति स्म ।

परिणयेत् ? अहं भवत्यै सुखमयं जीवनं दास्यामि'' इति । अनन्यगतिका किन्नरी एतं प्रस्तावम् अङ्गीकृतवती ।

सा तस्य समीपं गत्वा अन्तः हस्तं प्रसारितवती । तदा कुक्कुटाः जागरिताः । माता कुक्कुटी तस्याः हस्ते व्रणान् कृतवती । तथापि किन्नरी

## करकौशलवस्तूनि

नागाजनाः विशिष्टानि वस्त्राणि स्वजातेः चिह्नत्वेन उपयुञ्जते । काष्टशिल्पम्, वेणुनिर्मितवस्तूनि, घट-निर्माणम् इत्यादिषु कार्येषु नागाजनाः सुनिपुणाः । नागारण्येषु वेणवः वेत्राणि च पर्याप्ततया उपलभ्यन्ते एव । वेणुवेत्रादिभिः कटादीन्, नूपुरान्, कङ्कणानि, आभरणानि च निर्मातुं समर्थाः ते ।



हस्तम् इतस्ततः चालयन्ती सर्वत्र अन्विष्टवती । अधोभागे मृदुवस्तुनः स्पर्शः जातः । सा तत् बहिः आकृष्टवती । अहो, तत्र आस्तां तस्याः पक्षौ ! तौ जीर्णौ दुर्गन्धयुक्तौ, मलिनौ च आस्ताम् । तथापि तस्याः महान् आनन्दः जातः । सा हस्तेन एव तौ स्वच्छीकृतवती । ततः तौ धृत्वा साक्षात् आकाशस्थं स्वगृहं प्रति गतवती मेघान् अतिक्रम्य ।

रात्रौ कोहिटः गृहं प्रति आगतः । गृहे पत्नी न दृष्टा । गृहे सर्वत्र तेन अन्वेषणं कृतम् । पत्नी न प्राप्ता । उन्मत्तः इव व्यवहरन् प्रतिवेशिनः पृष्टवान् सः । कोऽपि किमपि न जानाति स्म । सः कुक्कुटगृहं प्रति गत्वा तस्य अन्तः पक्षयोः अन्वेषणं कृतवान् । तत्र तौ न आस्ताम् । प्रवृत्तं किम् इति सः ज्ञातवान् । महान् कोपः खेदः च तस्मिन् उत्पन्नः ।

सः गृहस्य पुरतः उपविश्य उच्चैः रोदनम् आरब्धवान् । तावता कश्चन काकः तस्य समीपम् आगत्य अवदत् - ''भोः अलं रोदनेन । आकाशे गच्छन्ती सा दृष्टा मया । मम साहाय्यं क्रियते चेत् अहं भवन्तं किन्नरलोकं नयेयम्'' इति ।

''काकमित्र ! मया कीदृशं साहाय्यं करणीयम् ?'' इति कुतूहलेन अपृच्छत् कोहिटः ।

''अनारोग्यकारणतः मम शरीरे तत्र तत्र श्वेतवर्णता उत्पन्ना । अतः मम बान्धवाः मां सर्वदा निन्दन्ति । किन्नरीम् उक्त्वा मां कृष्णवर्णीयं कारयतु'' इति अवदत् काकः ।

कोहिटः एतत् अङ्गीकृतवान् । ततः कोहिटः काकस्य पृष्ठभागे उपविष्टवान् ।

अल्पे एव काले तौ किन्नरलोकं प्राप्तवन्तौ ।

## विशिष्टपदानाम् अर्थः

*मोरुङ्ग* - अविवाहितानां वासस्थलम् ।

*दयो* - शूलायुधविशेषस्य नाम ।

*खाङ्ग* - स्कन्धे धर्तुं योग्यः वेणुनिर्मितः कण्डोलः ।

*किन्नरः* - आकाशवासिनः जातिविशेषीयाः । सदा मिथुनतया एव सञ्चरन्ति ते ।

*झूयो, रूही* - तण्डुलनिर्मितः यवागूविशेषः ।



इतस्ततः अन्विष्य किन्नर्याः गृहम् अपि तौ प्राप्तवन्तौ । किन्नरी अपि अनुक्त्वा यत् आगतं तदर्थं लज्जाम् अनुभवति स्म । अतः सा उक्तवती - ''पुनः भूलोकं प्रति गमनविचारं मां मा वदतु । सुखेन शान्त्या च अत्रैव निवसाव'' इति ।

कोहिटः एतत् अङ्गीकृतवान् ।

# बुद्धिमान् तेनालिरामः



कदाचित् विजयनगराधिपस्य कृष्णदेवरायस्य आस्थानं प्रचलति स्म । तदा उभौ सेवकौ पार्श्वद्वये गृहीत्वा किञ्चन चित्रम् आनीय सभासद्भ्यः दर्शितवन्तौ । राज्ञः एव चित्रं तत् । राजा तत् दृष्ट्वा प्रतिगत्य सिंहासने उपविष्टवान् ।



सभासदां मुखतः 'अहा' 'अहो' इत्यादीनि वचनानि निर्गतानि । ''सहस्रं सुवर्णनाणकानि मया कलाकाराय दत्तानि एतदर्थम्'' इति अवदत् राजा । ''चित्रस्य विषये भवताम् अभिप्रायः कः ?'' इति सभासदः अपृच्छत् सः ।



तदा कश्चन सभासत् उत्थाय – ''महाराज ! एतत् तु अपूर्वम् ! भवन्तं यथावत् चित्रितवान् अस्ति कलाकारः । सूक्ष्माः अंशाः अपि तेन चित्रिताः । केन एतत् चित्रितम् ?'' इति अपृच्छत् ।

राजा किमपि न उत्तरं न दत्तवान् । 'अहो अपूर्वम्' 'राज्ञः यथावत् चित्रम्' इत्यादीनि वचनानि सभायां श्रुतानि । तथापि राजा न सन्तुष्टः । ''रामकृष्ण ! चित्रस्य विषये भवतः अभिप्रायः कः ?'' इति तेनालिरामकृष्णम् अपृच्छत् राजा ।





''एतत् तु अपूर्वम् इव एव भाति । किन्तु भवतः अपरः भागः न दृश्यते अत्र'' इति अवदत् रामकृष्णः । ''यदा चित्रं दृश्यते तदा बहवः अंशाः ऊहनीयाः भवन्ति । एतदपि किं न ज्ञायते भवता ? भवान् एव एकं चित्रं चित्रयतु तावत्'' इति अवदत् राजा ।



मासानन्तरं राजा सभायाम् अपृच्छत् - ''रामकृष्णः क्व ? किं सः इदानीम् अपि चित्रं लिखन् एव अस्ति ?'' इति । ''अस्मासु केनापि सः चित्रं लिखन् न दृष्टः'' इति अवदत् कश्चित् । ''किं सः कूर्चं ग्रहीतुं वा शक्नुयात् ?'' इति अपरः उपहासपूर्वकम् अपृच्छत् । तावता रामकृष्णः मन्दहासपूर्वकम् सेवकाभ्यां सह सभां प्रविष्टवान् ।



''किं मम चित्रं प्रदर्शयितुम् अनुज्ञा अस्ति ?'' इति राजानम् अपृच्छत् रामकृष्णः । राजा शिरः अचालयत् । सेवकौ चित्रस्य आवरणम् अपनीतवन्तौ । सभासदः कण्ठं दीर्घीकृत्य चित्रं दृष्टवन्तः । ''किम् एतत् ? अत्र अश्वस्य पुच्छमात्रं दृश्यते !'' इति अवदत् राजा ।



तदा रामकृष्णः अवदत् - ''अवशिष्टं सर्वं भवता ऊहनीयं महाराज ! तृणानि खादित्वा अश्वः अग्रे गतः अस्ति । अतः अश्वस्य पुच्छेतरशरीरभागः चित्रात् बहिः अस्ति ।''

भारतदेशविषये भारतीयानां च विषये कियत् जानन्ति भवन्तः ? भारतं विशालं राष्ट्रम् । अतः अस्य जनजीवने भूभागेषु च सन्ति अनेकानि वैविध्यानि वैशिष्ट्यानि च । एषः विभागः तत्सर्वं परिचाययितुं करोति कश्चन प्रयत्नम् । एतेन भवतां ज्ञानस्य वृद्धिः स्यात् इति भावयामः वयम् ।

# भारतदर्शनम्

## प्रपञ्चस्य प्रथमः शस्त्रचिकित्सकः

सुश्रुतः प्रायः अतिप्राचीनकाले आसीत् । किन्तु सः स्वकालावधौ तु अग्रगण्यः आसीत् । जगतः प्रथमः शस्त्रचिकित्सकः सः । क्रि. पू. ८०० शतके स्थितः सः नेत्रपटलचिकित्सां गर्भचिकित्सां, मूत्रकोशस्य शिलापनयनचिकित्सां, सुरूपचिकित्सां च करोति स्म ।

शरीरस्य बाह्याङ्गेषु सीवनार्थं सुश्रुतः वृक्षत्वङ्-निर्मितां तन्त्रीं केशान् च उपयुङ्क्ते स्म । अन्तर्भागेषु सीवनार्थं तु कृष्ण-पिपीलिकायाः उपयोगः क्रियते स्म तेन ।

व्रणस्थलस्य पार्श्वद्वयम् एकत्रीकृत्य तदुपरि पिपीलिकाः प्रेष्यन्ते स्म तेन । यदा ताः दंष्ट्राभ्यां व्रणपार्श्वद्वयं सम्यक् गृह्णन्ति तदा तासां मुण्डं रुण्डतः पृथक्क्रियते स्म । रुण्डं च शरीरात् पृथग्भूय तत्रैव तिष्ठति स्म । गच्छता कालेन चर्मणः पार्श्वद्वयम् अपि संयुक्तं भवति स्म । एतादृशे व्रणसीवने कृष्णपिपीलिकानाम् उपयोगः क्रियते स्म । एवं प्राचीने एव काले शस्त्रचिकित्साकरणं, तदर्थं पिपीलिकादीनाम् उपयोगः च आश्चर्याय खलु ?



# केरलराज्ये विलक्षणं नृत्यम्

पञ्चाशदधिकाः दृढकायाः वृक्षनिर्मितवेदिकायाः उपरि यदि निरन्तरं नृत्यन्तः उत्कूर्दनं कुर्युः तर्हि तस्याः वेदिकायाः का गतिः स्यात् ? प्रायः सा भग्ना भवेत् खलु ?

केरले स्थितायां 'चाविट्टुनाटकम्' इत्येतस्मिन् जानपदनृत्ये पञ्चाशदधिकजनैः काष्ठमय्यां वेदिकायां नृत्य-कूर्दनादिकं क्रियते । अयं नृत्यप्रकारः अधिकतया न प्रसिद्धः देशे ।



षोडशे शतके पोर्चुगीस् जनाः यदा आगताः तदा ते आत्मना सह 'ओपेरा'-नाटकक्रमम् अपि भारतम् आनीतवन्तः । स च नाटक-प्रकारः स्थानीयेन कथक्कली-नृत्यप्रकारेण सम्मिलितः जातः । तस्य फलतः 'चाविट्टुनाटकम्' उद्भूतम् ।

अत्र क्रिश्चियन्-जानपद-कथायाः युरोपियन्-इतिहासस्य वा अवलम्बनं क्रियते । नटाः स्वसम्बद्धं गीतं स्वयं गायन्ति अत्र । नाटकस्य समाप्तितः पूर्वं युद्ध-मल्लयुद्धादयः प्रवर्तन्ते । तदवसरे पञ्चाशदधिकाः नटाः वेदिकाम् आरुह्य नृत्यन्तः कूर्दन्ति । नृत्यार्थं वेदिका दृढैः काष्ठखण्डैः एव सज्जी-क्रियते । पञ्चाशदधिकाः दृढकायाः यत् नृत्यकूर्दनादिकं कुर्वन्ति ततः यदि वेदिका भग्ना न भवति तर्हि भाव्यते यत् नृत्यम् अयशस्वि जातम् इति !!

# शैत्ये अपि सुखम्

यदि भवन्तः काश्मीरं गच्छेयुः तर्हि तत्र हेमन्तकालस्य शैत्यं सोढुं सर्वथा न शक्नुयुः । किन्तु काश्मीरीयाः तु तादृशे अपि शैत्ये निश्चिन्ततया तिष्ठन्ति । कथं ते तथा स्थातुं शक्नुवन्ति ?



तेषां वस्त्राणाम् अन्तः भवति अग्निपात्रम् । मृत्तिका-मये तस्मिन् भवन्ति केचन ज्वलन्तः अङ्गाराः । तत् अग्निपात्रं वेत्रकण्डोले स्थापयित्वा तं कण्डोलं वस्त्रस्य अन्तः स्थापयन्ति ते । तस्य पात्रस्य औष्ण्यं वस्त्रस्य अन्तः सुखदं वातावरणं निर्माति ।

# मल्लस्तम्भे साहसम्



मल्लस्तम्भक्रीडा अति-प्राचीना । महाराष्ट्रे एतस्याः प्रयोगः अधिकः । शक्तेः, जागरूकतायाः, कौशलस्य, परिणतेः च उपयोगः आधिक्येन भवति एतस्यां क्रीडायाम् ।

विशाले अङ्गणे मल्लस्तम्भः स्थाप्यते । तदुपरि स्थित्वा तम् अवलम्ब्य वा पटवः विविधान् साहस-प्रयोगान् प्रदर्शयन्ति ।

दशमे शतके स्थितानां चालुक्यवंशीयानां साहित्ये मल्लस्तम्भस्य उल्लेखः कृतः दृश्यते । अनन्तरकाले एषा क्रीडा अदृश्यतां गता आसीत् । १९ शतके द्वितीयः पेश्वे बाजिरावः एतां क्रीडाम् उज्जीवितवान् । अद्य विविधाः मल्लस्तम्भक्रीडाः क्रीड्यन्ते, राष्ट्रस्तरीयस्पर्धाः अपि प्रचलन्ति एताम् अवलम्ब्य ।





# व्रीहिक्षेत्रे मीनपोषणम्



व्रीहिक्षेत्रे मीनाः ! एतत् विश्वासार्हम् इति न भाति खलु ? किन्तु एतत् तु सत्यम् एव । अरुणाचलप्रदेशे 'अपटानिस्' नामिका जनजातिः अस्ति । तज्जनजातीयाः एकम् अपूर्वं क्रमम् अनुसरन्ति मीनपोषणार्थम् । यदा क्षेत्रे व्रीहिः आरोप्यते तदा एव जलसङ्ग्रहान् निर्माय तेषु मीनान् पोषयन्ति ते । स च सङ्ग्रहः नातिगभीरः, नातिविस्तृतः, किन्तु मीनसञ्चारयोग्यः । मीनेभ्यः आहाररूपेण ते कांश्चन कीटान् मृदुसस्यानि च यच्छन्ति । यदा सस्य-लवनकालः उपस्थितः भवति तदा मीनाः अपि प्रवृद्धाः सन्तः खादनयोग्याः भवन्ति ।

# वसन्तपञ्चमी

यदा शिशिरऋतोः आरम्भः भवति तदा समग्रे भारते वसन्तपञ्चमीपर्व आचर्यते महता उत्साहेन । माघमासस्य शुक्लपक्षस्य पञ्चम्यां तिथौ एतत् पर्व भवति । तन्नाम फेब्रवरी-मार्चमासयोः कदाचित् तत् भवति इत्यर्थः । पूर्वभारते एतस्मिन् दिने सरस्वतीपूजा क्रियते । भगवती सरस्वती कलायाः, विज्ञानस्य, कौशलस्य च अधिदेवता । सा शक्ति-स्वरूपिणी अपि । सा स्फूर्तेः सर्जनशीलतायाः च प्रेरिका ।

पश्चिमवङ्गराज्ये एतस्मिन् दिने सरस्वती पूज्यते भक्त्या । पुस्तकानि सङ्गीतसाधनानि च तस्याः पुरतः स्थाप्यन्ते । एतस्मिन् दिने





बालैः पठनक्लेशः अनुभोक्तव्यः नास्ति । पूजानन्तरम् एषा प्रतिमा समुद्रे नद्यां वा विसृज्यते । अनन्तरदिने प्रार्थनायाः अनन्तरं बालाः पुस्तकम् उद्घाटयन्ति । सरस्वती-पूजादिने अत्र अल्पवयस्काः बालिकाः अपि शाटिकां धरन्ति ।

सरस्वती एतदवसरे 'बसुक'पुष्पैः पीतवर्णीयैः 'गण्ड'पुष्पैः च पूज्यते विशेषतः । एतस्मिन् काले तादृशानि पुष्पाणि प्राप्यन्ते आधिक्येन । अतः एषा परम्परा आगता स्यात् ।

उत्तरभारते, तत्रापि पञ्जाबराज्ये वसन्त-पञ्चमीदिने 'वाताटोत्सवः' प्रचलति । एतस्मिन् दिने विविधाः वाताटस्पर्धाः आयोजिताः

भवन्ति ।

यदा निसर्गः समृद्धः सुन्दरः च भवति तदा सः निर्दिश्यते 'वसन्तः' इति । तस्मिन् काले उत्तरभारते सर्वाणि क्षेत्राणि पीतवर्णैः सर्षपकुसुमैः शोभितानि भवन्ति । सर्षपपुष्पाणां विकासं सङ्केतयितुं, धान्यलवनकाले सोत्साहं भागं ग्रहीतुं च जनाः एतस्मिन् दिने पीतवर्णीयं वस्त्रं धरन्ति आधिक्येन ।

# कार्नवल्पर्व

फेब्रवरीमासे गोवाराज्यस्य समग्रः परिसरः सङ्गीतस्वरेण हासध्वनिना च पूर्णः भवति । कार्नवल्नामकः त्रिदिनात्मकः उत्सवः एव अत्र कारणम् । एषः उत्सवः विलासस्य विनोदस्य च हेतुः ।

पूर्वं गोवाराज्ये मोमो नाम कश्चन राजा आसीत् । सः आज्ञापितवान् आसीत् यत् कार्नवल्पर्वसमये केनापि किमपि कार्यं न करणीयम् इति । ''अहं राजा मोमो कार्नवल्-समये सर्वस्यापि गोवाभिजनस्य सर्वविधम् अपि कार्यं निषेधामि'' इति तस्य आज्ञा आसीत् । स तु विलासप्रियः आसीत् ।

गायकानां नर्तकानां च समूहाः वर्णमयीः नौकाः आरुह्य उत्सवम् आचरन्ति । नौकाः विविधाकारिकाः भवन्ति । उत्सवनिमित्तम् एव सज्जीकृताः भवन्ति । नौकाचालकाः हासजनकानि वर्णमयानि मुखावरणानि धरन्ति । ऐतिहासिकघटनाः अवलम्ब्य लघु-नाटकानि रच्यन्ते एतदवसरे । तानि 'फेलोस्' इति उच्यन्ते । नौकासु एव तानि अभिनीयन्ते ।



कार्नवल् अवसरे प्रदर्श्यमानेषु नाटकेषु पुरुषाः एव पात्राणि धरन्ति । नाटके सङ्गीतं नृत्यं चापि भवति ।

नटाः वर्णमयान् वेषान् धृत्वा पारम्परिकम् उष्णीषं च धृत्वा शरीरं वर्णेन लिम्पन्ति । उत्सवस्य मासात् पूर्वम् एव नाटकाभ्यासः प्रचलति । नाटकाभिनयः प्रातः एव आरभ्यते, आसायं प्रवर्तते च । द्रष्टारः नटैः सह एव स्थानात् स्थानं गच्छन्ति अपि ।

यदा पोर्चुगीसजनाः गोवां पालयन्ति स्म तदा ते कार्नवल्-उत्सवं 'पोर्सो ए ब्रुटल्' इति निर्दिष्टवन्तः । 'हासोपहासयोः उत्सवः' इति तस्य पदस्य अर्थः ।

सप्तदशे शतके तस्य उत्सवस्य अङ्गतया मार्गेषु युद्धस्य अनुकरणं प्रचलति स्म । एतस्मिन् युद्धे चूर्णैः, सुधाखण्डचूर्णैः च पूर्णानि कुक्कुटाण्डानि पत्रपिण्डानि च स्वीकृत्य युद्धं कुर्वन्ति स्म ते ।

# 'दोस्मोचे'पर्व



जम्मुकाश्मीरराज्ये लडाक्प्रदेशे अद्यापि अनुस्त्रियमाणा प्राचीनपरम्परा 'दोस्मोचे' नाम । फेब्रवरीमासे प्रतिवर्षं लेह्प्रासादः आतोद्यवाद्यसङ्गीतादिभिः अनुरणितः भवति ।

तस्मिन् दिने विविधाश्रमीयाः लामाजनाः मुखावरणानि धृत्वा नृत्यन्ति । ते पूजायाः अङ्गतया नैवेद्यं सज्जीकृत्य देवाय अर्पयित्वा अन्ते विसृज्य नाशयन्ति अपि ।

'दो'नामकस्य तन्तुनिर्मितस्य पवित्रस्य पूजा मुख्यतया भवति । एतत् पवित्रं 'तक्थोक्'-आश्रमीयैः लामाजनैः सज्जीक्रियते । ते ज्योतिश्शास्त्रे, तन्त्रशास्त्रे, अन्येषु अपि एतादृशविषयेषु निपुणाः । यदा लामाजनाः पूजां कृत्वा मन्त्रान् वदन्ति तदा आराध्यदेवः दुष्टशक्तीनां, बुभुक्षितपिशाचानां, दानव-

बलस्य च जयार्थम् अपेक्षितं बलं ददाति इति विश्वस्यते ।

दशविधानि विविधनैवेद्यानि मुख्यनैवेद्येन सह भवन्ति । एतानि सर्वाणि विपण्यां मुख्यमार्गेषु शोभायात्रया नीयन्ते ।

सङ्गीतकाराः, वाद्यवृन्दं, कृष्णशिरस्त्रं धृतवन्तः केचन, विशेषवस्त्रं धृतवन्तः अन्ये लामाः च एतां शोभायात्रम् अनुसरन्ति परमया भक्त्या ।

नगरसीमा यदा अतिक्रान्ता भवति तदा शोभायात्रा स्थगिता भवति । विनोदनृत्येन सह तानि नैवेद्यानि दाहपूर्वकं नाश्यन्ते । अग्रिमे वर्षे प्राकृतिकविकोपाः न भवेयुः, दुष्टशक्तयः अपगच्छेयुः च इति उद्देशेन एतत् क्रियते । एषु दिनेषु मध्यावधौ विविधानि जानपदनृत्यानि अपि प्रवर्तन्ते ।

# 'एश् वेन्स्डे'

'एश् वेन्स्डे' इत्यस्य 'भस्मीयबुधवासरः' इति अर्थः वक्तुं शक्यः । एतस्मिन् वर्षे एषः उत्सवः फेब्रवरीमासस्य २०तमे दिनाङ्के भविष्यति । क्रिश्चियन्जनाः कृतानां सर्वविध-पापानां निमित्तं तद्दिने पश्चात्तापं सूचयितुं ललाटे भस्मीयं वध्यचिह्नं धरन्ति । सभा यदा प्रचलति तदा आरम्भे एव पूजकः सर्वेषां ललाटे तत् चिह्नं निर्माति भस्मना ।

गते वर्षे ताडभानुवासरे (Palm Sunday) यानि ताडपत्राणि आशीर्वादेन अनुगृहीतानि आसन् तेषाम् उपयोगेन भस्म निर्मीयते । पवित्रजलं संयोज्य धूपादिना पवित्रीक्रियते तत् ।

पूर्वं येसुक्रिस्तः चत्वारिंशत् दिनानि अरण्ये वसन् उपवासं यत् कृतवान् तस्य आरम्भदिनं स्मारयति एतत् इति क्रिश्चियन्जनाः भावयन्ति ।

यदा येसुक्रिस्तः ३२वर्षीयः आसीत् तदा जानः तस्मै पवित्रदीक्षां दत्तवान् । बोधेन रोगनिवारणादीनाम् आरम्भतः पूर्वं क्रिस्तः उपवासम् आरब्धवान् आसीत् ।



एवं भस्मीयबुधवासरः चत्वारिंशद्-दिनात्मकस्य उपवासरूपस्य तपसः आरम्भदिनं सङ्केतयति । एतदवसरे क्रिश्चियन्जनाः मांसाहारं परित्यजन्ति । एवम् एव चत्वारिंशद्दिनानि अनुवर्तते । ईस्टर्पर्वदिने एतस्य परिसमाप्तिः ।

# भारत-गौरव-गाथा

**महासंस्कृत्याः स्थूलदर्शनम्, प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः**

## २५. कथानां पृष्ठभूमिकायां स्थिता कथा



विद्यालयस्य वार्षिकोत्सवस्य दिने अभिनीतस्य अभिज्ञानशाकुन्तलनाटकस्य यशस्वितायाः कारणतः सन्दीपः नितरां सन्तुष्टः आसीत् । तेन अभिनीतं कण्वस्य पात्रं सर्वेषां प्रशंसापात्रं जातम् आसीत् ।

''अहं पितामहस्य मुखात् प्राचीनऋषीणां जीवनशैलीं बहुधा श्रुतवान् आसम् । अतः कण्वस्य पात्रस्य अभिनये मम कोऽपि क्लेशः न जातः'' इति अवदत् सन्दीपः ।

''यदि भवान् दुर्वाससः पात्रम् अभिनीतवान् स्यात् तर्हि वरम् अभविष्यत्'' इति उपहासपूर्वकम् उक्तवती चमेली ।

''रे, तिष्ठ तूष्णीम्'' इति क्रोधेन अवदत् सन्दीपः ।

''मया यत् उक्तं तस्यैव अभिप्रायस्य पोषणं कृतवते भवते धन्यवादाः'' इति करताडनपूर्वकम् उक्तवती चमेली ।

प्रतिभानुवासरं ये सन्दीपस्य गृहं नियततया आगच्छन्ति स्म ते सर्वे तत्र उपस्थिताः आसन् । चमेल्याः वचनं श्रुत्वा ते सर्वे हसितवन्तः ।

''बहूनि शतकानि अतीतानि चेदपि तत् नाटकम् अद्यापि जनान् यथापूर्वं रञ्जयति इति तु महते आश्चर्याय ! अहं चिन्तयामि राजा विक्रमादित्यः एतत् नाटकं दृष्ट्वा यावत् सन्तुष्टः

*अनुवर्तमाना कथामाला*

बलस्य च जयार्थम् अपेक्षितं बलं ददाति इति विश्वस्यते ।

दशविधानि विविधनैवेद्यानि मुख्यनैवेद्येन सह भवन्ति । एतानि सर्वाणि विपण्यां मुख्यमार्गेषु शोभायात्रया नीयन्ते ।

सङ्गीतकाराः, वाद्यवृन्दं, कृष्णशिरस्त्रं धृतवन्तः केचन, विशेषवस्त्रं धृतवन्तः अन्ये लामाः च एतां शोभायात्रम् अनुसरन्ति परमया भक्त्या ।

नगरसीमा यदा अतिक्रान्ता भवति तदा शोभायात्रा स्थगिता भवति । विनोदनृत्येन सह तानि नैवेद्यानि दाहपूर्वकं नाश्यन्ते । अग्रिमे वर्षे प्राकृतिकविकोपाः न भवेयुः, दुष्टशक्तयः अपगच्छेयुः च इति उद्देशेन एतत् क्रियते । एषु दिनेषु मध्यावधौ विविधानि जानपदनृत्यानि अपि प्रवर्तन्ते ।

# 'एश् वेन्स्डे'

'एश् वेन्स्डे' इत्यस्य 'भस्मीयबुधवासरः' इति अर्थः वक्तुं शक्यः । एतस्मिन् वर्षे एषः उत्सवः फेब्रवरीमासस्य २०तमे दिनाङ्के भविष्यति । क्रिश्चियन्जनाः कृतानां सर्वविध-पापानां निमित्तं तद्दिने पश्चात्तापं सूचयितुं ललाटे भस्मीयं वध्यचिह्नं धरन्ति । सभा यदा प्रचलति तदा आरम्भे एव पूजकः सर्वेषां ललाटे तत् चिह्नं निर्माति भस्मना ।



गते वर्षे ताडभानुवासरे (Palm Sunday) यानि ताडपत्राणि आशीर्वादेन अनुगृहीतानि आसन् तेषाम् उपयोगेन भस्म निर्मीयते । पवित्रजलं संयोज्य धूपादिना पवित्रीक्रियते तत् ।

पूर्वं येसुक्रिस्तः चत्वारिंशत् दिनानि अरण्ये वसन् उपवासं यत् कृतवान् तस्य आरम्भदिनं स्मारयति एतत् इति क्रिश्चियन्जनाः भावयन्ति ।

यदा येसुक्रिस्तः ३२वर्षीयः आसीत् तदा जानः तस्मै पवित्रदीक्षां दत्तवान् । बोधेन रोगनिवारणादीनाम् आरम्भतः पूर्वं क्रिस्तः उपवासम् आरब्धवान् आसीत् ।

एवं भस्मीयबुधवासरः चत्वारिंशद्-दिनात्मकस्य उपवासरूपस्य तपसः आरम्भदिनं सङ्केतयति । एतदवसरे क्रिश्चियन्जनाः मांसाहारं परित्यजन्ति । एवम् एव चत्वारिंशद्दिनानि अनुवर्तते । ईस्टर्पर्वदिने एतस्य परिसमाप्तिः ।

# भारत-गौरव-गाथा

महासंस्कृत्याः स्थूलदर्शनम्, प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः

## २५. कथानां पृष्ठभूमिकायां स्थिता कथा



विद्यालयस्य वार्षिकोत्सवस्य दिने अभिनीतस्य अभिज्ञानशाकुन्तलनाटकस्य यशस्वितायाः कारणतः सन्दीपः नितरां सन्तुष्टः आसीत् । तेन अभिनीतं कण्वस्य पात्रं सर्वेषां प्रशंसापात्रं जातम् आसीत् ।

''अहं पितामहस्य मुखात् प्राचीनऋषीणां जीवनशैलीं बहुधा श्रुतवान् आसम् । अतः कण्वस्य पात्रस्य अभिनये मम कोऽपि क्लेशः न जातः'' इति अवदत् सन्दीपः ।

''यदि भवान् दुर्वाससः पात्रम् अभिनीतवान् स्यात् तर्हि वरम् अभविष्यत्'' इति उपहासपूर्वकम् उक्तवती चमेली ।

''रे, तिष्ठ तूष्णीम्'' इति क्रोधेन अवदत् सन्दीपः ।

''मया यत् उक्तं तस्यैव अभिप्रायस्य पोषणं कृतवते भवते धन्यवादाः'' इति करताडनपूर्वकम् उक्तवती चमेली ।

प्रतिभानुवासरं ये सन्दीपस्य गृहं नियततया आगच्छन्ति स्म ते सर्वे तत्र उपस्थिताः आसन् । चमेल्याः वचनं श्रुत्वा ते सर्वे हसितवन्तः ।

''बहूनि शतकानि अतीतानि चेदपि तत् नाटकम् अद्यापि जनान् यथापूर्वं रञ्जयति इति तु महते आश्चर्याय ! अहं चिन्तयामि राजा विक्रमादित्यः एतत् नाटकं दृष्ट्वा यावत् सन्तुष्टः

अनुवर्तमाना कथामाला



तावदेव सन्तुष्टः स्यात् पितामहोऽपि इति'' इति अवदत् पार्थः, यक्ष तेषु बालेषु अन्यतमः ।

''मम महान् आनन्दः जातः इति तु सत्यम् एव । किन्तु विक्रमादित्येन इतोऽपि अधिकः एव सन्तोषः प्राप्तः स्यात् । यतः राजा तत् नाटकं संस्कृतमयम् एव दृष्टवान् स्यात् । यदा तत् आंग्लभाषया अनूद्यते तदा तस्य सौन्दर्यं किञ्चित्प्रमाणेन अपगतं भवेत् एव । शेक्स्पीयरस्य नाटकं संस्कृतेन अनूदितं चेदपि एवमेव भवेत्'' इति अवदत् देवनाथवर्यः ।

''तात ! कालिदासस्य आश्रयदातुः विक्रमादित्यस्य विषये खलु भवान् वदन् अस्ति ?'' इति अपृच्छत् चमेली ।

''किम् इतिहासे एकः एव विक्रमादित्यः आसीत् इति भवती चिन्तयति ? इतिहासे विक्रमादित्यनामानः बहवः । आदित्यः इव विक्रमवन्तः ये आसन् ते सर्वे विक्रमादित्यपदेन निर्दिश्यन्ते स्म प्रायः । तादृशेषु अन्यतमः गुप्तवंशीयः द्वितीयः चन्द्रगुप्तमौर्यः । उज्जयिनी तस्य राजधानी आसीत् । चतुर्थे शतके आसीत् एषः । क्रि. पु. प्रथमे शतके अपरः विक्रमादित्यः आसीत् । तस्य कारणतः विक्रमशकस्य आरम्भः जातः । विक्रमशकः क्रि. पु. ५८ तमे वर्षे आरब्धः । किन्तु इतिहासः एतस्य विक्रमादित्यस्य विषये अधिकं न वदति । एषः विक्रमादित्यः स्वजीवितकाले प्रायः सुप्रसिद्धः आसीत् एव, किन्तु वयम् इदानीम् अधिकं न जानीमः । कालिदासः क्रिस्तपूर्वीय-विक्रमादित्यस्य, मौर्यवंशीयस्य विक्रमादित्यस्य वा आस्थाने आसीत् इति भाव्यते ।''

''विक्रमवेतालकथा श्रूयते खलु ? सः विक्रमः कः ? कदा आसीत् सः ?'' इति पृष्टवती चमेली ।

''प्रथमे शतके कश्चन विक्रमः उज्जयिनीं राजधानीं कृत्वा शासनं करोति स्म । विक्रम-वेतालकथायाः रचयिता गुणाढ्यः अपि प्रथमे शतके एव आसीत् । सः राज्ञः विक्रमादित्यस्य प्रसिद्धिं श्रुत्वा तादृशीः कथाः लिखितवान् स्यात्'' इति अवदत् देवनाथवर्यः ।

''किन्तु तात ! अस्माकम् अध्यापकेन उक्तं किल यत् विक्रमवेतालकथा सोमदेवेन लिखिता इति ?'' इति अवदत् सन्दीपः ।

''भवतः अध्यापकस्य कथनं युक्तम् एव । मम कथनम् अपि युक्तम् एव । प्रसिद्धे कथासरित्सागरग्रन्थे विक्रमवेतालकथा उक्ता अस्ति । कथासरित्सागरः बृहत्कथायाः कश्चन भागः । सोमदेवस्य सहस्रवर्षेभ्यः पूर्वम् एव स्थितेन गुणाढ्येन लिखिता आसीत् बृहत्कथा ।



बृहत्कथायां बह्व्यः आसक्तिजनिकाः कथाः आसन् प्रायः । किन्तु सा कृतिः इदानीं न उपलभ्यते ।''

''कथं सा नष्टा जाता ?'' - पार्थः अपृच्छत् ।

''सा च दुःखदायिनी काचित् कथा'' इति उक्त्वा देवनाथवर्यः तां कथाम् आरब्धवान् -

''इदानीं पैठण इति यत् श्रूयते तस्य नगरस्य प्राचीनं नाम आसीत् 'प्रतिष्ठनपुरम्' इति । द्विसहस्राधिकवर्षेभ्यः पूर्वं तच्च नगरं सातवाहन-वंशीयैः राजभिः पाल्यते स्म । तेषु अन्यतमस्य आस्थानस्य पण्डितः आसीत् गुणाढ्यः ।

कदाचित् राजा इष्टवान् यत् मया अपि संस्कृतं पठनीयम् इति । तदा गुणाढ्यः उक्तवान् - ''केषुचित् एव वर्षेषु अहं भवन्तं संस्कृतज्ञं करिष्यामि'' इति । किन्तु अपरः पण्डितः उक्तवान् यत् अहं षण्मासाभ्यन्तरे एव राजानं संस्कृतं बोधयिष्यामि इति ।

''यदि भवान् षण्मासाभ्यन्तरे राजानं संस्कृतं पाठयेत् तर्हि अहं संस्कृतेन लेखनम् एव परित्यजेयम्'' इति अवदत् गुणाढ्यः ।

ततः सः तरुणपण्डितः षण्मासान् यावत् राजानं संस्कृतं पाठितवान् । तदवसरे राजा संस्कृतस्य सामान्यज्ञानं प्राप्तवान् आसीत् । अतः पराजितः गुणाढ्यः संस्कृतेन लेखनं परित्यक्तवान् । प्रतिष्ठनपुरम् अपि परित्यक्तवान् सः ।

''यदि भवता मम राजधानी परित्यज्यते एव तर्हि कस्यचित् विशिष्टस्य कार्यस्य निमित्तं वा भवतः समयस्य उपयोगं करोतु । समग्रे देशे सञ्चारं कृत्वा तत्र तत्र श्रूयमाणाः कथाः सङ्गृह्णातु । ततः ताः प्राकृतभाषया लिखतु च'' इति अवदत् राजा ।

गुणाढ्यः एतां सूचनाम् अङ्गीकृतवान् । सः आ हिमालयात् आकन्याकुमारि प्रवासं कृत्वा सहस्राधिकजनानां मुखात् अनेकाः कथाः

श्रुतवान् । ताडपत्रेषु ताः कथाः लिखितवान् च । वर्षाणि गतानि । ताडग्रन्थान् शकटे आरोप्य गुणाढ्यः प्रतिष्ठनपुरम् आगतवान् । 'राजा मां सोत्साहं स्वागतीकुर्यात्' इति चिन्तितम् आसीत् तेन । किन्तु राजा केनचित् कारणेन दिव्यमौनम् आश्रितवान् आसीत् । एतस्मात् नितरां खिन्नः गुणाढ्यः आत्मना लिखितान् ताडग्रन्थान् स्वीकृत्य समीपस्थस्य पर्वतस्य शिखरं गतवान् । मेघावृतः सायङ्कालः सः । गुणाढ्यः पर्वतशिखरे अग्निं प्रज्वाल्य तस्य प्रकाशे कथापठनम् आरब्धवान् । तदवसरे वायुः हितकरतया वाति स्म । किन्तु कथां पठित्वा गुणाढ्यः यदा तानि ताडपत्राणि अग्नौ समर्पितवान् तदा वायुः उग्रः जातः । मेघाः च गर्जनं कृतवन्तः ।

गुणाढ्यः स्वग्रन्थस्य द्वितीयाध्यायस्य पठनम् आरब्धवान् । स च प्राणि-पक्षि-वृक्षसम्बद्धः आसीत् । तस्य कथां श्रोतुं बहवः प्राणिनः पक्षिणः च तत्र उपस्थिताः । यदा कथापठनम् समाप्य गुणाढ्यः तत्सम्बद्धानि ताडपत्राणि अग्नौ स्थापितवान् तदा सर्वे पशवः चीत्कारं कृतवन्तः । पक्षिणः च पक्षौ चालयन्तः कलरवं कृतवन्तः उच्चैः । वृक्षाः खेदेन पर्णानि पातितवन्तः । किन्तु सर्वमपि व्यर्थम् आसीत् ।

एषा प्रक्रिया एवम् एव अनुवृत्ता । कश्चन भटः एतत् ज्ञात्वा धावन् गत्वा राजानं प्रवृत्तं निवेदितवान् । राजा झटिति पर्वतशिखरं गत्वा गुणाढ्यं तस्मात् कृत्यात् निवारितवान् । किन्तु एतावता पञ्चभागात्मकस्य ग्रन्थस्य चत्वारः भागाः भस्मीभूताः आसन् ।

एकादशे शतके काश्मीरीयराजस्य अनन्त-देवस्य आस्थाने स्थितः सोमदेवः ताः कथाः संस्कृतेन अनूदितवान् । राजा राज्ञी च पुत्राणां दुर्व्यवहारतः खिन्नाः आसन् । तान् राजकुमारान् एताः कथाः श्रावयित्वा सन्मार्गे आनीतवान् सोमदेवः ।

''अहो, कथानां पृष्ठभूमिकायां कीदृशी रोचिका कथा अस्ति !'' इति सन्तोषेण आश्चर्येण च उक्तवती चमेली । अन्ये तस्याः भावं प्रोत्साहितवन्तः ।





# विघ्नेश्वरः

देवाः राक्षसाः च सम्भूय क्षीरसागरस्य मथनं कृतवन्तः । ततः ते अमृतं प्राप्तवन्तः । विष्णुः जगन्मोहिन्याः अवतारं प्राप्य राक्षसान् मोहयित्वा देवेभ्यः अमृतस्य वितरणं कृतवान् । अमृतपानतः देवाः अमरत्वं प्राप्तवन्तः । एतस्मात् ते गर्वेण सर्वत्र सञ्चारम् आरब्धवन्तः ।

राक्षसानां विषये जातम् अन्याय्यं तारकासुरः सोढुं सर्वथा न शक्तवान् । अतः सः ब्रह्माणम् उद्दिश्य घोरां तपस्यां कृतवान् । यदा ब्रह्मा प्रत्यक्षः जातः तदा सः अमरत्वरूपं वरं प्रार्थितवान् ।

तदा ब्रह्मा अवदत् - ''जातस्य मरणं ध्रुवम् । मरणात् मुक्तिः असाध्या । अतः अन्यं कमपि वरं याचतु'' इति ।

तारकासुरः क्षणकालं विचिन्त्य अवदत् - ''शिवस्य पुत्रस्य हस्तात् मम मरणं भवतु, नान्यस्य कस्यचित् अपि हस्तात्'' इति ।

ब्रह्मा 'तथास्तु' इति उक्त्वा ततः अदृश्यः अभवत् ।

एतावता शिवस्य पत्नी सतीदेवी दक्षयज्ञस्य योगाग्नौ आत्मसमर्पणं कृतवती आसीत् । शिवः च उन्मादं प्राप्तवान् इव व्यवहरन् हिमालयपर्वतं गत्वा घोरतपस्यायां लीनः जातः आसीत् ।

तारकासुरः सर्वान् राक्षसान् मेलयित्वा त्रीन् अपि लोकान् स्वाधीनीकृतवान् । ततः सः देवानां पीडनम् आरब्धवान् । इन्द्रादयः देवाः भीताः सन्तः ब्रह्मणः समीपं गत्वा रक्षणोपायं याचितवन्तः ।

तदा ब्रह्मा अवदत् - ''मया तारकासुराय वरः दत्तः अस्ति यत् शिवस्य पुत्रात् एव भवतः मरणं भवितुम् अर्हति इति । अन्यः कोऽपि तं संहर्तुं न अर्हति । यदा शिवस्य पुत्रः भविष्यति तदा एव तारकासुरस्य संहारः अपि भवितुम् अर्हति'' इति ।



ततः ते सर्वे विष्णुसमीपं गतवन्तः । तेषाम् आशयः आसीत् यत् विष्णुः कमपि साहाय्यं कुर्यात् इति ।

विष्णुः तान् उक्तवान् – ''सतीदेवी शिवस्य पुत्रीत्वं प्राप्य वर्धमाना अस्ति । तस्याः नाम पार्वती इति । अतः शिवपार्वत्योः विवाहः यथा सम्पद्येत तथा प्रयत्नः करणीयः अस्माभिः'' इति ।

देवाः नारदं हिमवतः समीपं प्रेषितवन्तः । नारदस्य आदेशस्य अनुगुणं हिमवान् तपस्यायां मग्नस्य शिवस्य समीपं गतवान् । शिवं सम्पूज्य अभ्यर्थितवान् यत् भवतः सेवां परिचर्यां च कर्तुं पार्वत्यै अनुज्ञा दातव्या कृपया इति ।

शिवस्य मौनम् एव उत्तरम् आसीत् । मौनम् एव सम्मतिसूचकं भावयन् हिमवान् शिवस्य परिचर्यार्थं पार्वतीं नियोजितवान् तस्मिन् एव दिने ।

बाल्यात् एव पार्वती शिवं विशेषतः इच्छति स्म । बाल्ये एव नारदः शिवस्य अनेकाः कथाः तां श्रावितवान् आसीत् । तासां श्रवणतः सा पुलकिता भवति स्म । एतादृशस्य शिवस्य सेवार्थं यदा अवसरः लब्धः तदा सा नितरां सन्तुष्टा अभवत् । परमसौभाग्यं भावितवती सा ।

सूर्योदयात् पूर्वम् एव सा मयूरपिञ्छैः शिवस्य तपसः स्थलं स्वच्छीकरोति स्म । सुगन्धचन्दनजलेन तं प्रदेशं सिञ्चति स्म । मौक्तिकैः रङ्गवल्लीं रचयति स्म । सुवर्णलताभिः निर्मितेन रत्नखचितेन कण्डोलेन स्वादूनि फलानि नीत्वा शिवस्य पुरतः स्थापयति स्म । हिमगिरिशिखरात् स्रुतं स्फटिकस्वच्छं जलं सुवर्णकमण्डलौ पूरयित्वा जपमालायाः पार्श्वे स्थापयति स्म । शिवस्य मनः आक्रष्टुं विविधैः अलङ्कारैः आत्मानं भूषयति स्म । भैरवी, केदारः, शिवरञ्जनी इत्यादिभिः रागैः मधुरतया आलापनं करोति स्म ।

शिवः सकृत् नेत्रे उन्मील्य मां पश्येत् इति तस्याः इच्छा आसीत् । सा सदा शिवस्य मनोहरं मुखारविन्दम् एव पश्यन्ती भवति स्म । तथापि कदापि शिवस्य कृपाकटाक्षः तस्यां न अपतत् । 'मम सर्वे प्रयत्नाः व्यर्थाः किम् ?' इति चिन्तयन्ती सा महतीं निराशताम् अनुभवति स्म ।

देवेन्द्रस्य मनसि अभासत यत् शिवं तपसः विचालयितुं कामदेवः एकः एव समर्थः इति । अतः सः कामदेवं प्रार्थितवान् – ''शिवः

पार्वत्याम् आसक्तः यथा भवेत् तथा कमपि उपायं चिन्तयतु कृपया'' इति ।

कामदेवः रत्या सह रथे उपविश्य प्रस्थितवान् । रथस्य सारथिः आसीत् वसन्तः । पुष्पाणि एव तस्य बाणाः आसन् । इक्षुदण्डः तस्य धनुः आसीत् । एवं सन्नद्धः कामदेवः हिमालयस्य तं प्रदेशं प्राप्तवान्, यत्र च शिवः तपः करोति स्म ।

कामदेवस्य आगमनतः तत्प्रदेशे वसन्त-ऋतुः उत्पन्नः । निसर्गस्य रमणीयता चित्ताकर्षिका जाता । कोकिलानां कूजनं, भृङ्गानां झङ्कारः च तस्मिन् प्रदेशे सर्वत्र श्रूयते स्म ।

परिसरे आकस्मिकतया जातं परिवर्तनं ज्ञात्वा आश्चर्यम् अनुभवन् शिवः नेत्रे उन्मीलितवान् । वसन्तऋतोः आगमनं दृष्ट्वा सः नितराम् आश्चर्यचकितः । तपोभङ्गः जातः यत् ततः तस्य दुःखं जातम् । तस्य हस्ततः जपमाला पतिता । यदा पतितां जपमालां पार्वती उन्नीय शिवाय यच्छन्ती आसीत् तदा वृक्षान्तरितः कामदेवः शिवं लक्ष्यीकृत्य पुष्पबाणान् प्रयुक्तवान् ।

बाणस्पर्शात् शिवस्य शरीरे नवं चैतन्यम् उत्पन्नम् इव । मुखं किञ्चिदिव अवनमय्य कटाक्षेण शिवम् एव पश्यन्ती पार्वती तेन दृष्टा । पार्वत्याः आकारः, मुखं, सौन्दर्यं च तस्य चित्तम् आकर्षत् ।

क्षणाभ्यन्तरे शिवः अवधानवान् जातः । तपोभङ्गस्य कारणतः सः खिन्नः क्रुद्धः च । क्रोधेन सः तृतीयं नेत्रम् उद्घाटितवान् । तेन कामदेवः भस्मतां गतः । शिवः तु झटिति



ततः उत्थाय कैलासशिखरं प्रति वेगेन निर्गतवान् ।

रतिदेवी तत्समये पत्या कामदेवेन सहैव आसीत् । पत्युः भस्मीभूतत्वं दृष्ट्वा सा उच्चैः रोदनम् आरब्धवती । तदा ब्रह्मादिदेवाः तत्र प्रत्यक्षाः अभवन् । ते सहगमनाय उद्यतां रतिदेवीं सान्त्वयन्तः उक्तवन्तः यत् शिव-पार्वत्योः विवाहः यदा भविष्यति तदा कामदेवः अपि उज्जीवितः भविष्यति इति । अतः रतिदेवी भस्म जागरूकतया रक्षन्ती तत्रैव वसन्ती दिनानि यापितवती ।

एतस्याः घटनायाः अनन्तरं स्वसौन्दर्ये पार्वत्याः विश्वासः नष्टः । शरीरलावण्यादिषु तस्याः उत्साहः पूर्णतः विनष्टः । जीवनम् एव व्यर्थम् इति भावः तस्याः मनसि उत्पन्नः । तपः एकम् एव एतस्य परिहारः इति विचिन्त्य सा घोरं तपः आरब्धवती ।



कानिचन पर्णानि खादन्ती सा तपः करोति स्म । जयाविजयानामिके उभे सख्यौ तया सह वसतः स्म । काले काले पार्वत्याः कुशलवार्तां ते हिमवन्तं मेनकां च सूचयतः स्म ।

दिनेषु गतेषु पार्वत्याः तपः उग्रं जातम् । सा पर्णानाम् अपि खादनं पूर्णतः परित्यक्तवती । अतः सा 'अपर्णा' इति नाम प्राप्तवती ।

शिवः यद्यपि कामदेवं भस्मीकृतवान्, तथापि मदनविकारतः आत्मानं रक्षितुं तु न शक्तवान् । पार्वत्यां तस्य मनः आसक्तं जातम् । तावता पार्वत्याः तपः अपि उग्रतां गतम् आसीत् ।

शिवः छद्मवेषेण पार्वत्याः समीपं गत्वा तस्याः अन्तःकरणस्य परीक्षां कृतवान् । पार्वत्यां स्थितं प्रबलम् अनुरागं ज्ञात्वा सः तस्याः परिणये मतिं कृतवान् । विवाहविषयकवार्तालापार्थं हिमवतः गृहं प्रति सप्तर्षीन् प्रेषितवान् सः । विवाहवार्तालापार्थं शिवः स्वयं सप्तर्षीन् प्रेषितवान् अस्ति इति ज्ञात्वा हिमवान् नितरां सन्तुष्टः । सः विवाहं सन्तोषेण अङ्गीकृतवान् ।

प्रमथगणेन अनुस्त्रियमाणः शिवः वरः सन् हिमवतः गृहं गतवान् । एतस्य विवाहस्य निमित्तं ब्रह्मा, विष्णुः, इन्द्रः, कुबेरः, नारदः, अन्ये बहवः श्रेष्ठाः महर्षयः चापि आगताः आसन् ।

सुमङ्गली अरुन्धती शिवस्य ललाटस्य तृतीयनेत्रस्य स्थाने कल्याणतिलकं स्थापितवती । वररूपेण शिवः विशेषतः शोभते स्म । अतः सर्वे जनाः तं 'सुन्दरेश्वर'नाम्ना निर्दिष्टवन्तः ।

सर्वविधाः अलङ्काराः कृताः आसन् । वधूं पार्वतीं विष्णुः शिवसमीपम् आनीय - "भवान् सुन्दरेश्वरः । मम भगिनी पार्वती मीनाक्षी" इति मन्दहासपूर्वकं वदन् शिवपार्वत्योः करौ योजयित्वा तौ विवाहमण्डपं प्रति नीतवान् ।

शिवपार्वत्योः विवाहः महता वैभवेन सम्पन्नः । हिमालयपर्वते शिवः पार्वती च यत्र तपः कृतवन्तौ तत्र विश्वकर्मा एकं सुन्दरम् अन्तःपुरं निर्मितवान् ।

शिवपार्वत्यौ येन मार्गेण अन्तःपुरं प्रति गच्छतः स्म तस्मिन् एव मार्गे कामदेवस्य भस्म आसीत् । तस्य भस्मनः पार्श्वे एव रतिदेवी विलपन्ती उपविष्टा आसीत् । तस्याः नेत्राभ्याम् अश्रुधारा प्रवहति स्म । सा पत्युः प्राणभिक्षां

याचन्ती इव तत्र उपविष्टा आसीत् ।

शिवः पार्वती च तस्याः समीपं गतवन्तौ । तस्याः शिरसि हस्तं स्थापयित्वा तौ आशीर्वादं कृतवन्तौ – ''दीर्घसुमङ्गली भव'' इति । शिवः तृतीयं नेत्रम् उद्घाटितवान् । एतदवसरे तत्र अग्निः न आसीत् । शीतलकिरणाः ततः निर्गताः । तेषां स्पर्शतः कामदेवः पूर्वतनं रूपं प्राप्य उत्थितवान्, ततः अदृश्यः अभवत् च ।

तदा शिवः रतिदेवीम् उक्तवान् – ''देवि ! भवत्याः पतिः पुनर्जन्म प्राप्तवान् अस्ति । सः सर्वदा दृष्टिगोचरः न भविष्यति । तं भवती एका एव द्रष्टुं शक्नोति, न अन्ये । अन्यान् सः इच्छति चेत् द्रष्टुं शक्नोति । तस्य इच्छायाः अनुगुणं भविष्यति अन्यदर्शनम् । एतादृशं वरं तस्मै सन्तुष्टः अहं यच्छन् अस्मि'' इति ।

शिवः पार्वती च गृहप्रवेशं कृतवन्तौ । अरुन्धती नीराजनेन तयोः स्वागतं कृतवती । तदा विश्वकर्मा वस्त्रावृतम् एकं फलकं शिवपार्वत्योः पुरतः संस्थाप्य – ''एतत् एकम् अभूतपूर्वं चित्रम् । एतस्मिन् चित्रे भवन्तौ स्तः । एतस्य चित्रस्य दर्शनस्य अनन्तरम् अपि अस्माभिः निर्णेतुं न शक्तं यत् भवतोः कतरस्य सौन्दर्यम् अधिकम् इति । अतः भवन्तौ एव वदताम् । अतः एतत् भवतोः पुरतः उपस्थापितम् अस्ति'' इति हसन् अवदत् ।

स च कश्चन दर्पणः आसीत् । तत्र स्वप्रतिबिम्बं दृष्ट्वा उभौ अपि हसितवन्तौ । तदा नारदः अवदत् – ''केवलेन मन्दहास-



प्रकटनेन किमपि न सिद्धम् । अतः कतरः सुन्दरः इति शब्दैः वक्तव्यम् एव भवद्भ्याम्'' इति ।

तदा शिवः कटाक्षेण पार्वतीं पश्यन् – ''नक्षत्रम् इव प्रकाशमानं नासाभरणं धृतवत्याः शशिवदनायाः सुन्दर्याः सौन्दर्यम् एव श्रेष्ठम्'' इति ।

तत् श्रुत्वा पार्वती लज्जया शिरः अवनमय्य एव उक्तवती – ''सा स्त्री चिन्तयति यत् तस्याः पाणिं गृहीतवतः सौन्दर्यम् एव श्रेष्ठम् इति'' इति ।

तदा सर्वे हसितवन्तः । शिवपार्वत्योः उपरि पुष्पवृष्टिः जाता । अनन्तरं तौ दम्पती आन्दोलिकायाम् उपवेश्य आन्दोलितम् ।

तयोः पुरतः एव भित्तौ एकं सुन्दरं चित्रं चित्रितम् आसीत् । चित्रे उभौ गजौ नृत्यतः स्म । तौ अग्रिमपादौ उन्नीय पृष्ठभागीय-

पादाभ्यां तिष्ठन्तौ शुण्डया शुण्डां गृहीतवन्तौ आस्ताम् । तयोः पृष्ठभागे एकं सरोवरं दृश्यते स्म । सरोवरे एकं महापद्मं विकसितम् आसीत् । तयोः उपरि शिवपार्वत्योः दृष्टिः लग्ना । अत्रान्तरे पद्मस्य स्थाने रजतवत् प्रकाशमानम् एकं ज्योतिः उद्गतम् । तत् ज्योतिः क्रमशः विकसत् सर्वत्र व्याप्तं जातम् । तस्मिन् प्रकाशे शशिवर्णेन शोभमानः विघ्नेश्वरः दृष्टिगोचरः जातः ।

विघ्नेश्वरस्य मुखं गजस्य इव आसीत् । किन्तु तत् दिव्यया प्रभया शोभते स्म, प्रसन्नतां दर्शयति स्म च । तस्य दृष्टिः बौद्धिकसामर्थ्यं परिचाययति स्म । विशालम् उदरं कान्तिमयम् आसीत् । अभयमुद्रां धृत्वा स्थितः विघ्नेश्वरः पार्वत्यै विशेषतः अरोचत ।

विघ्नेश्वरं पश्यन्तौ पार्वतीपरमेश्वरौ अनिर्वचनीयम् आनन्दं प्राप्तवन्तौ । निर्निमेष-दृष्ट्या तौ तं पश्यन्तौ स्थितवन्तौ । विघ्नेश्वरः शुण्डां वामतः कृत्वा मधुरस्वरेण अवदत् - ''अहं विघ्नेश्वरः अस्मि । विघ्नानां निवारकः अस्मि । पञ्चभूतानाम् अधिपतिः गणपतिः अस्मि । चित्रविचित्ररूपधारी चित्रगणपतिः अस्मि । भवतोः प्रेम्णः फलरूपेण शिवस्य तेजस्वितां धरन् कुमारस्वामिनः जन्म भविष्यति । सः तारकासुरस्य वधं करिष्यति । तदनन्तरं भवतोः पुत्ररूपेण मम जन्म भविष्यति । पुत्रगणपतिरूपेण अहम् अवतारं प्राप्स्यामि'' इति ।

विघ्नेश्वरस्य मधुरध्वनिं श्रुत्वा तं ग्रहीतुं पार्वती हस्तं प्रसारितवती । किन्तु तावता विघ्नेश्वरः अदृश्यतां गतः आसीत् ।

शिवः पार्वती च आनन्दसागरे विहरन्तौ दिनानि यापितवन्तौ । तस्मिन् एव समये जगतः अहितकारकः, जगति कम्पं जनयितुं समर्थः कश्चन विघ्नः समुत्पन्नः ।

*– (अनुवर्तते)*





# देवीभागवतम्

त्वष्टृप्रजापतिः सर्वेषु देवेषु महान् आसीत् । सः घोरं तपः आचरितवान् । सः इन्द्रं द्विषति स्म इत्यतः त्रिमुखात्मकस्य विश्वरूपस्य सृष्टिं कृतवान् । विश्वरूपः वर्धमानः आसीत् । त्रिभिः मुखैः सः भिन्नभिन्नकार्याणि करोति स्म इत्यतः मुनिगणस्य प्रशंसापात्रम् अभवत् । सः एकेन मुखेन वेदपठनं करोति स्म । द्वितीयेन मुखेन मद्यं (तालरसं) पिबति स्म । तृतीयेन मुखेन जगति प्रवर्तमानाः घटनाः परिशीलयति स्म ।

विश्वरूपः पञ्चाग्नीनां मध्ये स्थित्वा तपः आचरति स्म । एकपादं केवलम् आधाररूपेण स्थापयित्वा शीतकाले जले स्थित्वा तपः आचरति स्म । ग्रीष्मकाले अग्नेः मध्ये स्थित्वा खादनं पानं च विना तपः करोति स्म । इन्द्रः एतत् सर्वम् अवलोकमानः आसीत् । सः भावितवान् यत् विश्वरूपः मां पदच्युतं कर्तुं सज्जतां कुर्वन् अस्ति इति । अतः विश्वरूपस्य तपोभङ्गं कर्तुं निश्चितवान् सः । स अप्सरसः प्रेषितवान् । तासां शृङ्गारचेष्टानां प्रभावः विश्वरूपस्य उपरि न अभवत् । ताः इन्द्रसमीपं प्रत्यागत्य - ''विश्वरूपस्य तपोभङ्गकरणसामर्थ्यम् अस्मासु नास्ति'' इति उक्तवत्यः ।

इन्द्रः महात्मनः विश्वरूपस्य हननं कर्तुं निश्चितवान् । 'अहं महत् पापम् आचरन् अस्मि' इत्यपि न भावितवान् इन्द्रः । सः ऐरावतम् आरुह्य विश्वरूपस्य समीपं गतवान् । तस्य उपरि वज्रायुधं प्रयुक्तवान् ।

'इन्द्रः मम पुत्रस्य हननं कृतवान्' इति ज्ञातवान् त्वष्टा क्रुद्धः अभवत् । सः अथर्वमन्त्राणाम् उच्चारणं कृत्वा अग्निं

५. मृत्युकथा



प्रज्वालितवान् । ततः प्रकाशमानः एकः पुत्रः उत्पन्नः । तं दृष्ट्वा त्वष्टा उक्तवान् – ''भवतः नाम 'वृतः' इति भविष्यति । भवतः अग्रजम् इन्द्रः वज्रायुधेन मारितवान् । इन्द्रस्य मारणार्थम् एव भवतः जन्म जातम् अस्ति । एतत् कार्यं सुचारुरूपेण करोतु'' इति ।

त्वष्टा वृतनिमित्तं विविधानि अस्त्राणि सृष्ट्वा दत्तवान् । रथम् अपि दत्त्वा सुमुहूर्ते ब्राह्मणानां द्वारा आशीर्वादं कारयित्वा इन्द्रस्य वधार्थं प्रेषितवान् । वृतः इन्द्रस्य संहारार्थम् आगच्छन् अस्ति इति वार्तां श्रुत्वा मुनयः, यक्षाः, देवाः च भीताः अभवन् । तेषां धावनं दृष्ट्वा इन्द्रः सेवकान् आदिष्टवान् – ''रुद्रान्, आदित्यान्, वसून्, दिक्पालकान् च विमाने उपवेश्य युद्धार्थं प्रेषयन्तु'' इति ।

एवम् उक्त्वा इन्द्रः बृहस्पतिम् अपि स्वेन सह गजस्य उपरि उपवेश्य युद्धम् आरब्धवान् । इतरे देवाः अपि शस्त्राणि स्वीकृत्य तौ अनुसृतवन्तः । वृतः अपि दानवसैन्यं स्वीकृत्य प्रस्थितवान् ।

सैन्यद्वयमपि आगत्य मानससरोवरस्य उत्तरभागे उपस्थितम् अभवत् । शतं वर्षाणि यावत् युद्धं प्राचलत् । एतेन समस्तं जगत् त्रस्तम् अभवत् । आरम्भे वरुणः पलायनं कृतवान् । अनन्तरं क्रमशः वायुगणः, यमः, कान्तिहीनः अग्निः च पलायनं कृतवन्तः । सर्वान् देवान् जित्वा वृतः पितुः समीपम् आगतवान् ।

पितरं प्रणम्य सः अवदत् – ''सर्वेऽपि भीताः सन्तः पलायनं कृतवन्तः । यतः ते भयात् भीताः आसन् । अतः अहं तेषु कम् अपि न हतवान् । इन्द्रः श्वासनिग्रहं कृत्वा धावन् आसीत् । अतः अहं तस्य गजं गृहीत्वा आनीतवान् अस्मि । भवान् एनं गजं उपहाररूपेण स्वीकरोतु । इतः परं किं करणीयम् इति कृपया सूचयतु । कठिनम् अपि कार्यं कर्तुम् अहं सन्नद्धः अस्मि एव'' इति उक्तवान् ।

पुत्रस्य पराक्रमेण सन्तुष्टः त्वष्टा अवदत् – ''पुत्र ! भवतः पराक्रमः असदृशः अस्ति । इतः परम् अहं सगर्वं शिरः उन्नमय्य सर्वत्र गन्तुं शक्नोमि । मम मनोवेदना समाप्ता अस्ति । मम जीवनं सार्थकम् अभवत् । मयि कापि अशान्तिः नास्ति इदानीम् । अग्रे भवता किं करणीयम् इत्यपि सूचयिष्यामि । शृणोतु । इन्द्रः विश्वासार्हः न । सः अतीव चतुरः । सः यत्किमपि कर्तुम् अर्हति । अतः भवान् ब्रह्माणम् उद्दिश्य तपः आचरतु । अमरः

भूत्वा इन्द्रस्य संहारं करोतु । दुष्टः सः कारणं विना मम पुत्रस्य हननं कृतवान् अस्ति । अहं तां घटनां विस्मर्तुं न शक्नोमि । तस्य इन्द्रस्य मरणानन्तरमेव अहं निश्चिन्तः भविष्यामि'' इति ।

वृत्रः पितुः अनुज्ञां प्राप्य क्रोधाविष्टः सन् गन्धमादनपर्वतं प्रति गतवान् । गङ्गायां स्नानं कृत्वा सर्वविधान् आहारान् अपि परित्यज्य योगपालनं कृतवान् । ब्रह्माणम् उद्दिश्य तपः आरब्धवान् । तस्य घोरं तपः दृष्ट्वा मुनयः अपि प्रशंसाम् आरब्धवन्तः ।

तस्य तपसा सन्तुष्टः ब्रह्मा प्रत्यक्षः भूत्वा - ''अलं तपसा । किम् अपेक्षितम् इति वदतु'' इति उक्तवान् ।

वृत्रः साञ्जलिः ब्रह्माणं प्रणम्य - ''भगवन् ! इन्द्रपदं प्राप्य सन्तुष्टः अभवम् । अद्य भवतः दर्शनभाग्यं प्राप्तवान् इत्यतः इतोऽपि आनन्दम् अनुभवन् अस्मि । धन्यः अस्मि अहम् । मया अपेक्षितं वरं यदि भवान् दातुम् इच्छति तर्हि तादृशं वरं ददातु, येन अहम् अमरः भवेयम् । लोहेन, काष्ठेन, कोमलेन, कठोरेण वा वस्तुना, केनापि अन्येन शस्त्रेण वा मम मरणं न स्यात् । यथा यथा युद्धं तीव्रं भवति तथा तथा मम शक्तिः प्रवर्धेत । तादृशं वरं ददातु कृपया'' इति प्रार्थितवान् ।

वृत्रेन अपेक्षितं वरं दत्त्वा ब्रह्मा ततः निर्गतवान् । वृत्रः अत्यन्तम् आनन्देन पितुः समीपम् आगतवान् । प्रवृत्तं सर्वं विस्तरेण निवेदितवान् ।

तदा त्वष्टा - ''पुत्र ! सर्वदा शुभं भवतु



भवतः । भवतः अग्रजं मारितवतः दुष्टस्य पापिनः इन्द्रस्य वधः इदानीं सुकरः जातः अस्ति । निर्भयः सन् अग्रे गच्छतु'' इति उक्तवान् ।

पितुः आज्ञानुसारम् इन्द्रस्य वधं कर्तुं रथम् आरुह्य वृत्रः सेनया सह युद्धार्थं प्रस्थितवान् । इन्द्रः अपि पुनश्च वृत्रेन सह योद्धुं सिद्धः अभवत् । इन्द्रवृत्रयोः घोरं युद्धं प्रावर्तत । तस्मिन् इन्द्रः पराजितः अभवत् । सः अनाथः जातः आसीत् । वृत्रः अमरावतीं गत्वा तत्रत्यां सर्वां सम्पदं स्वायत्तीकृतवान् ।

पुत्रः स्वर्गस्य राजा अभवत् इति ज्ञात्वा त्वष्टा बहु आनन्दम् अनुभूतवान् । देवाः अनाथाः सन्तः इतस्ततः वासम् आरब्धवन्तः । देवनगरी राक्षसनगरी अभवत् ।

देवाः शिवाय स्वदुस्स्थितिं निवेदितवन्तः । ते - ''वयं भवन्तं शरणम् आगताः स्मः ।



अस्मान् रक्षतु'' इति प्रार्थितवन्तः ।

तदा शिवः देवान् उद्दिश्य - ''वयं ब्रह्मणा सह विष्णोः समीपं गच्छाम । सः एव वृतं मारयितुं समर्थः अस्ति'' इति उक्तवान् ।

सर्वे मिलित्वा वैकुण्ठं गतवन्तः । तान् दृष्ट्वा विष्णुः अपृच्छत् - ''सर्वे मिलित्वा आगताः सन्ति खलु । कः विशेषः ?'' इति ।

देवाः स्वकष्टानि विस्तरेण उक्तवन्तः । तदा विष्णुः तान् उद्दिश्य - ''भवद्भिः अनुभूतं कष्टम् अहं जानामि । इन्द्रवृतयोः मध्ये मैत्रीं वर्धयन्तु । वज्रायुधं स्वीकृत्य अहम् अदृश्यरूपेण तिष्ठामि । अहं भवतां साहाय्यं करिष्यामि । सर्वविधसमस्यानां परिहारं कर्तुं समर्था अस्ति जगन्माता । सा प्रार्थिता चेत् भवतां साहाय्यं करिष्यति । तस्याः मायया ग्रस्तः वृतः इन्द्रद्वारा हतः भविष्यति । जगन्मातुः साहाय्येन एव भवन्तः वृतं मारयन्तु'' इति उक्तवान् ।

देवाः कल्पवृक्षैः पूर्णस्य मेरुपर्वतस्य उपरि गतवन्तः । तत्र गत्वा ते महादेव्याः ध्यानं कृतवन्तः ।

महादेव्या पूर्वं कृतं साहाय्यं स्मारयन्तः ते - ''भवती पूर्वम् अपि महिषासुरं, शुम्भं, निशुम्भम्, इतरराक्षसान् च हत्वा साहाय्यं कृतवती अस्ति । मातः ! सः वृतः भवत्याः अपि शत्रुः इति भाति । नो चेत् भवत्याः भक्तान् अस्मान् सः न अपीडयिष्यत्'' इति उक्तवन्तः ।

देवानां स्तुत्या प्रसन्ना देवी आभूषणानि धृत्वा, त्रिनेत्रधारिणी सती, चतुर्भिः भुजैः आयुधानि गृहीत्वा, वर्णमयवस्त्राणि धृत्वा प्रत्यक्षा अभवत् । देवेभ्यः साहाय्यकरणस्य आश्वासनं दत्त्वा सा अदृश्या अभवत् । देवाः अपि तृप्ताः सन्तः प्रतिगतवन्तः । अनन्तरं ते इन्द्रवृतयोः मैत्रीसम्पादनार्थं मुनिगणं वृतस्य समीपं प्रेषितवन्तः ।

मुनयः वृतस्य समीपम् आगत्य - ''वृत ! भवान् निश्चयेन योग्यः पुरुषः अस्ति । इन्द्रः अपि महान् एव । अतः भवतोः द्वयोः सम्बन्धः मैत्रीपूर्णः यदि भविष्यति तर्हि सुवर्णं सुगन्धमयं जातम् इव । इन्द्रः स्नेहवर्धनविषये बद्धादरः यथा स्यात् तथा वयं करिष्यामः । भवान् अपि स्नेहवर्धनविषये आसक्तः भवतु । वयं भवतोः मध्ये मध्यवर्तिनः भवामः'' इति उक्तवन्तः ।

तदा वृतः अवदत् - ''भवत्सु मम महती श्रद्धा अस्ति । भवताम् इच्छाम् अहं कदापि

न निराकरोमि । किन्तु ब्रह्महत्यापातकिनि इन्द्रे कथम् अहं विश्वासं कुर्याम्'' इति ।

तत् श्रुत्वा मुनयः अवदन् – ''यः पापभाक् भवति सः निश्चयेन तस्य फलम् अनुभविष्यति एव । ब्रह्महत्यापातकस्य मद्यपानस्य च प्रायश्चित्तार्थम् उपायाः सन्ति । किन्तु मित्रद्रोहनिमित्तं प्रायश्चित्तं नास्ति । अतः भवान् इन्द्रेण सह मैत्रीवर्धनं कर्तुं शक्नोति'' इति ।

तदा वृत्रः – ''आर्द्रवस्तुना, शुष्कवस्तुना, शिलया, काष्ठेन वा, दिने रात्रौ वा, देवैः इन्द्रेण वा अहं न हन्तव्यः । अत्र भवताम् आक्षेपः यदि न स्यात् तर्हि आवयोः मैत्री भवितुम् अर्हति'' इति उक्तवान् ।

मुनयः इन्द्रं प्रवृत्तं सर्वं निवेदितवन्तः । इन्द्रः वृत्रस्य नियमान् अङ्गीकृतवान् । इन्द्रः अग्निसाक्षितया यदा वचनबद्धः अभवत् तदा वृत्रः इन्द्रेण सह मैत्रीं कृतवान् ।

द्वौ अपि स्नेहेन परस्परं मिलतः स्म, मिलित्वा विहरतः स्म च । समुद्रतटे नन्दनवने च द्वयोः विहारः भवति स्म । वृत्रस्य मनसि इन्द्रस्य विषये विश्वासः उत्पन्नः । किन्तु इन्द्रः वृत्रस्य हननार्थम् अवकाशं प्रतीक्षमाणः आसीत् ।

एकदा इन्द्रः वृत्रेन सह समुद्रतटे भ्रमन् आसीत् । सः कालः न रात्रेः, न वा दिनस्य । वृत्रम् इन्द्रं च विहाय तत्र अन्यः कोऽपि नासीत् । वृत्रस्य मारणार्थम् एषः उत्तमः अवसरः अस्ति इति इन्द्रः भावितवान् । अतः सः विष्णोः प्रार्थनां कृतवान् । विष्णुः अदृश्यरूपेण आगत्य वज्रायुधं प्रविष्टवान् । इन्द्रः समुद्रस्य फेनं दृष्टवान् । तत् आर्द्रं न आसीत्, शुष्कमपि न आसीत् । तत् अस्त्रमपि न । इन्द्रः मनसि एव देवीं प्रार्थितवान् । देवी स्वस्य अंशं फेने योजितवती । ततः इन्द्रः स्वस्य वज्रायुधं फेनेन आच्छादितवान् । वेगेन वज्रायुधं वृत्रस्य दिशि प्रक्षिप्तवान् च । एतेन क्षतग्रस्तः वृत्रः धराशायी भूत्वा तत्रैव मरणं प्राप्नोत् ।

शत्रुभयात् मुक्तः इन्द्रः अमरावतीं प्रति आगतवान् । मुनयः स्तोत्राणि पठितवन्तः । विजयं निमित्तीकृत्य महादेव्याः उत्सवाचरणम् अभवत् । नन्दनोद्याने देव्याः अतिरम्यं मन्दिरं निर्मितम् । तत्र देव्याः सुन्दरविग्रहस्य प्रतिष्ठापना कृता ।





# एकता

सुकर्मनामकः कश्चन महात्मा शिष्येण सुहासेन सह देशपर्यटनं कुर्वन् आसीत् । कदाचित् सूर्यास्तसमये तौ निरञ्जनवरनामकं कञ्चित् ग्रामं प्राप्तवन्तौ । तस्यां रात्रौ तत्रैव स्थातुम् इष्टवन्तौ तौ काञ्चित् यात्रिकशालां गतवन्तौ ।

यदा तौ तत्र प्राप्तवन्तौ तदा अन्तर्भागतः महान् कोलाहलः श्रुतः । कश्चन बलिष्ठः पुरुषः तत्र द्वादशवर्षीयं कञ्चित् बालकं वेत्रदण्डेन ताडयन् आसीत् । गुरुशिष्यौ अन्तः प्रवर्तमानं दृष्ट्वा बहु दुःखम् अनुभूतवन्तौ ।

यदा विचारितं तदा ज्ञातं यत् सः बालकः तद्दिनं यावत् तस्य पुरुषस्य गृहे कार्यं कुर्वन् आसीत् इति । तस्मिन् गृहे कार्यकरणं सः बालकः न इच्छति स्म । तस्मै तद् गृहं नरकसदृशं भाति स्म । अतः सः कमपि अनुक्त्वा गृहात् पलायनं कृतवान् आसीत् । तदीयः अन्यः कोऽपि न आसीत् । अतः सः यात्रिशालायां स्थातुम् आगतवान् आसीत् । सः बलिष्ठः पुरुषः आरोपयन् आसीत् यत् एषः बालकः कश्चित् अमूल्यं हारं मद्गृहात् चोरितवान् अस्ति इति । अतः सः तत्र आगत्य बालकं ताडयन् आसीत् । बालकः आक्रोशं कुर्वन् – ''मया चौर्यं न कृतम् । पुनः मां स्वगृहस्य कार्ये योजयितुं कृतं तन्त्रम् एतत्'' इति वदति स्म ।

बालकं निर्दयं ताडयन्तं पुरुषं दृष्ट्वा तत्रत्याः जनाः दुःखम् अनुभूतवन्तः । किन्तु बालकस्य रक्षणार्थं कोऽपि अग्रे न आगतवान् । बालकः वेदनां सोढुम् अशक्नुवन् कष्टम् अनुभवन् आसीत् । अनन्यगतिकः सः गङ्गेशनामकस्य पादौ गृहीत्वा 'मां रक्षतु' इति प्रार्थयन् आसीत् । गङ्गेशः शरीरेण पुष्टः बलिष्ठः च आसीत् । किन्तु सः बालकस्य प्रार्थनां न श्रुतवान् । उपेक्षया सः तं बालकम् अपवार्य अवदत् – ''किमर्थं मया भवान् रक्षणीयः ?

एतत् मम कार्यं न । आवश्यकं चेत् आरक्षकान् गत्वा सूचयतु'' इति ।

पुराणिकनामकः कश्चन दुर्बलः पुरुषः सर्वं पश्यन् आसीत् । रोषाविष्टः सः तस्य बालकस्य स्वामिनम् उद्दिश्य – ''अन्याय्यम् एतत् । यदि भवतः हारः नष्टः तर्हि गत्वा आरक्षकान् सूचयतु । भवान् बालकविषये पशुवत् व्यवहरन् अस्ति । लघुबालकं निर्दयं ताडयन् अस्ति खलु ! मुञ्चतु तम्'' इति उक्तवान् ।

तदा सः बलिष्ठः पुरुषः पुराणिकं कोपेन पश्यन् – ''दुर्बल ! प्राणाः प्रियाः न सन्ति किं भवतः ?'' इति पृच्छन् तं बलेन अपसारितवान् । पुराणिकः प्रेक्षकाणां मध्ये पतितवान् ।

तथापि पुराणिकः 'बालकं रक्षन्तु' इति जनान् प्रार्थयन् आसीत् । किन्तु कोऽपि तस्य साहाय्यार्थं न आगतवान् । अन्ते गुरुशिष्ययोः कथनानन्तरं यात्रिकशालायाः स्वामी मध्ये प्रवेशं कृतवान् । सः आरक्षकान् आहूतवान् । अनन्तरं बालकं तस्य स्वामिनं च आरक्षकाणाम् अधीनं कृतवान् । तावता अन्धकारः प्रसृतः आसीत् । तस्यां रात्रौ गुरुशिष्यौ तत्रैव उषित्वा प्रातः ततः प्रस्थितवन्तौ ।

मार्गे शिष्यः सुहासः पृष्टवान् – '' गुरुवर्य ! रात्रौ यात्रिकशालायां प्रवृत्तया घटनया अहं दुःखितः अस्मि । कश्चित् दृढकायः लघुबालं निर्दयं ताडयन् आसीत् । किन्तु तत्र उपस्थिताः सर्वेऽपि मौनेन स्थितवन्तः आसन् । कोऽपि तं बालकं रक्षितुम् अग्रे न आगतवान् । तेषां स्वभावः निकृष्टः खलु ?'' इति ।

तदा महात्मा अवदत् – ''ऐदम्प्राथम्येन भवान् एतादृशं दृश्यं पश्यन् अस्ति । अतः भवान् चिन्ताकुलः अभवत् । एकैकस्य अपि



जनस्य जीवने काश्चन घटनाः सम्भवन्ति एव । तदा सः कथं स्पन्दनं करोति इत्येतत् अवलम्ब्य तस्य व्यक्तित्वस्य निर्णयं कुर्मः । सर्वेऽपि चिन्तयन्ति यत् आपदः मम शिरसि मा पतन्तु इति । अत्र मूलं कारणम् अस्ति एकतायाः अभावः । बालकस्य स्वामिनः सम्मुखीकरणस्य सामर्थ्यं गङ्गेशे आसीत् । यदि इच्छा तर्हि सः बालकं रक्षितुम् अशक्ष्यत् । किन्तु तस्याः घटनायाः प्रभावः गङ्गेशस्य उपरि किञ्चिदपि न अभवत् । यतः तस्य मनः स्पन्दनशीलं न । मानवीयता तस्मिन् नास्ति एव । पुराणिकस्य शरीरस्य प्रतिकणम् अपि मानवीयतया पूर्णम् अस्ति । बालकस्य रक्षणार्थम् तस्य मनः उद्दीप्तम् आसीत् । किन्तु तस्य शारीरकसामर्थ्यं नास्ति । तत्र विद्यमानाः यदि एकीभूय एकत्र आगच्छन्ति तर्हि तत्र महती शक्तिः उत्पन्ना अभविष्यत् । किन्तु दौर्भाग्यं नाम ते कदापि एकत्रिताः न अभवन्'' इति ।

शिष्यः पृष्टवान् - ''गुरुवर्य ! एतस्य कोऽपि उपायः नास्ति किम् ?'' इति ।

तदा महात्मा मन्दहासपूर्वकं - ''किमर्थं न स्यात् ? एतस्य उपायः अस्ति एव । मम वचनम् अवधानपूर्वकं शृणोतु ।

पूर्वं दश जनाः काशीयात्रार्थं प्रस्थिताः । मार्गे त्रयः लुण्ठाकाः आगत्य तान् भायितवन्तः । ते लुण्ठाकाः तान् यात्रिकान् नायकसमीपं नेतुम् उद्युक्ताः । यात्रिकेषु कश्चित् बुद्धिमान् आसीत् । सः परिस्थितिम् अवगत्य उपायेन गानम् आरब्धवान् । चोराः चिन्तितवन्तः– 'गीतं खलु गायन् अस्ति एषः ? एतेन का हानिः अस्माकम् ?' इति । तस्मिन् गीते 'त्रयाणां त्रीणि नव भवन्ति' इति अर्थः आसीत् । अन्ये यात्रिकाः गीते निहितं गूढार्थं सम्यक् अवगतवन्तः । त्रयः त्रयः मिलित्वा एकैकं चोरं दृढं गृहीतवन्तः । दशमः यात्रिकः लुण्ठाकानां समीपे विद्यमानाः छुरिकाः स्वीकृतवान् । अरण्यलताभिः तेषां पाणिपादं बद्धम् । उत्तमाः, ज्ञानिनः, मानवतायाः उपासकाः च मनुष्ये गुप्तरूपेण विद्यमानं चैतन्यं जागरयित्वा इतरेषां मार्गदर्शकाः भवेयुः'' इति ।

सुहासस्य सन्देहः निवृत्तः अभवत् । सः मौनेन गुरोः अनुसरणं कृतवान् ।





# सुन्दर्याः बुद्धिमत्ता

कस्मिंश्चित् ग्रामे सुन्दरी कमलः चेति दम्पती निवसतः स्म । तयोः एकं लघुगृहम् आसीत् । अल्पा कृषिभूमिः अपि आसीत् । अतः तयोः आयः अत्यल्पः आसीत् ।

कमलः महालसः । गृहकार्यं किमपि न करोति स्म सः । पारिवारिककष्टानि तं कदापि न बाधन्ते स्म । सुन्दरी व्यवहारकुशला । अतः सा उपायेन कथमपि कुटुम्बपोषणभारं निर्वहति स्म ।

कमलः कदाचित् पत्नीम् उक्तवान् – "पर्व आसन्नम् अस्ति । गृहस्य भित्तयः वर्णरहिताः जाताः सन्ति । पर्वसमये बान्धवाः गृहम् आगच्छेयुः । गृहस्य एतां स्थितिं दृष्ट्वा उपहसेयुः ते । अतः अद्यैव कर्मकरान् आहूय वर्णलेपनं कारयाम" इति ।

तदा सुन्दरी उक्तवती – "आवयोः उभयोः दृढकाययोः स्थितयोः, कर्मकराणां का आवश्यकता ? कर्मकरेभ्यः वेतनं दातव्यम् खलु ? कर्मकराः आगताः चेत् वर्णं व्यर्थीकुर्वन्ति अपि । वर्णस्य व्यर्थीकरणं विना कथं लेपनं करणीयम् इति अहं जानामि । अतः आवाम् एव वर्णलेपनं करवाव । भवान् प्रतिवेशिगृहं गत्वा निश्रेणीम् आनयतु । तावता अहं जलं योजयित्वा वर्णं सज्जीकरिष्यामि लेपनार्थम्" इति ।

'अहो मया किमर्थं वा वर्णलेपनप्रस्तावः कृतः ! इदानीं मम उपरि एव कार्यभारः आपतितः खलु' इति अचिन्तयत् कमलः । क्षणकालानन्तरं कमपि उपायं प्राप्य भगिन्याः कमलायाः गृहं गतवान् सः ।

कमलायाः पतिगृहीयाः धनिकाः । कमलायाः वर्णः कृष्णः । अतः पतिगृहजनाः तस्याः कृष्णवर्णतां निन्दन्ति स्म । एतत्कारणतः एव श्वश्रूस्नुषयोः मध्ये सदा कलहः अपि प्रवर्तते स्म । यदा कलहः प्रवर्तते तदा कमला सहोदरगृहं प्रति आगच्छति स्म । केषाञ्चित्



दिनानाम् अनन्तरं तस्याः पतिः श्वशुरगृहम् आगत्य पत्नीम् अनुनीय गृहं प्रति नयति स्म । एवं बहुवारं प्रवृत्तम् आसीत् ।

कमलः भगिन्याः गृहम् आगत्य अवदत् - "भगिनि ! भवत्याः भ्रातृजाया इच्छति यत् पर्वनिमित्तम् इदानीम् एव आगन्तव्यं भवत्या इति । अतः अविलम्बेन गन्तव्यम् । श्वश्रूम् उक्त्वा मया सह प्रस्थानं करोतु" इति । श्वश्रूः कदापि स्नुषायाः मातृगृहगमनं न इच्छति स्म । 'अद्य तु अग्रजः एव निमन्त्रणार्थम् आगतः इत्यतः सा विरोधं न कुर्यात्' इति विचिन्त्य कमला श्वश्र्वाः अनुज्ञां प्रार्थितवती । बन्धूनां पुरतः स्नुषां कथं वा तर्जयेत् श्वश्रूः ? अतः सा अनुज्ञां दत्तवती । कमला सन्तोषेण अग्रजेन सह प्रस्थितवती ।

किञ्चिद्दूरं गमनानन्तरं कमलः भगिनीम् उक्तवान् - "मया विपण्यां कानिचन वस्तूनि क्रेतव्यानि सन्ति । कार्यं समाप्य अहम् अचिरात् एव गृहम् आगमिष्यामि" इति ।

'अस्तु' इति उक्त्वा शिरः चालितवती कमला एकाकिनी एव अग्रजगृहं प्रति प्रस्थिता । पार्थक्येन भगिन्याः प्रेषणे कमलस्य कश्चन उद्देशः आसीत् । 'स्वयं सुधा लेपनीया इति यत् सङ्कल्पितं तत् ननान्दुः पुरतः मम पत्नी परित्यजेत् । कर्मकरान् च आनयेत् एतदर्थम् । तदा मया श्रमः करणीयः न भवेत्' इति चिन्तितवान् आसीत् सः ।

सुन्दरी ज्ञातवती यत् पतिः निश्रेणीम् आनेतुं प्रतिवेशिगृहं न गतवान् इति । अतः सा स्वयं गत्वा निश्रेणीम् आनीतवती । 'मम पतिः

कुत्र गतवान् स्यात् इति चिन्तयन्ती सा स्वयं वर्णलेपनम् आरब्धवती ।

अत्रान्तरे कमला तत्र आगतवती । सा ननान्दरम् उक्तवती – ''मया दिनत्रयात् पूर्वम् एव पर्वनिमित्तम् आगन्तव्यम् इति भवती अपेक्षते इति अग्रजेन उक्तम् । सः वस्तूनि आनेतुं विपणिं गतवान् अस्ति'' इति ।

कमलायाः वचनस्य श्रवणात् सुन्दरी पत्युः व्यवहारस्य रहस्यं ज्ञातवती । अतः कुपिता अपि सा हसन्ती एव कमलाम् उक्तवती – ''युक्ते समये आगता भवती । भित्तौ वर्णलेपनं यथा तथा भवतीम् अपि वर्णेन लिम्पामि । भवतीं कृष्णवर्णीयां वदन्ति खलु पतिगृहीयाः । इतः परं यथा ते तथा न वदेयुः तथा करिष्यामि'' इति ।

सुन्दर्याः वचनं श्रुत्वा कुपिता कमला – ''किम् एतत् उच्यते भवत्या ? पूर्वम् एव आगच्छन्त्या मया अपराधः कृतः'' इति वदन्ती पतिगृहं प्रति वेगेन निर्गतवती ।

सुन्दरी कमलायाः कोपविषये अधिकम् अचिन्तयन्ती वर्णलेपनकार्ये मग्ना जाता ।

कोपेन पतिगृहं गच्छन्तीं भगिनीं दूरात् एव दृष्टवान् कमलः । सः गृहम् आगत्य पत्नीम् अपृच्छत् – ''कमला कुपिता सती निर्गता इति भाति । किं भवत्योः मध्ये किमपि प्रवृत्तम् ?'' इति ।

तदा सुन्दरी कोपं प्रदर्शयन्ती – ''ननान्द-भ्रातृजाययोः मध्ये बहुविधाः वार्तालापाः भवितुम् अर्हन्ति । भवतः भगिनी तु शीघ्र-कोपिनी । कोपेन पतिगृहात् भ्रातृगृहं प्रति, भ्रातृगृहात् पतिगृहं प्रति च गमनागमनं तस्याः सहजम् । अतः पुनः कदाचित् गत्वा मृदुवचनैः तस्याः कोपं निवारयितुं शक्नोति भवान् । इदानीं तु निश्रेणीम् आरुह्य वर्णलेपनं करोतु'' इति कठोरस्वरेण आदिष्टवती ।

'वर्णलेपनात् अद्य मम मोक्षः कथमपि भवितुं न अर्हति' इति विचिन्त्य कमलः वर्णपात्रं गृहीत्वा निश्रेणीम् आरूढवान् ।






नरेन्द्रदेवः जनसमूहस्य मध्ये स्थितम् आदित्यम् अभिजानाति ।

मां कोऽपि न अभि जानीयात् इति चिन्तितं स्यात् तेन ।

तात ! कः सः ? किं सः आदित्यः ?

अथ किम् ? तस्य स्वागतार्थं गच्छन्तः सन्ति जनाः ।












उत्तरं किमपि अदत्त्वा आदित्यः जनसमूहं दृष्टवान् ।

भो भो जनाः, शृण्वन्तु मम वचनम् । अस्माकं राजा सुरक्षितः अस्ति । अपायसम्भावनया तेन राजप्रासादः त्यक्तव्यः अभवत् । अचिरात् एव प्रत्यागमिष्यति सः । इतोऽप्यधिकम् अहं वक्तुं न शक्नोमि । धैर्यं धरन्तु भवन्तः.....







माध्यस्थ्यं वहतः नरेन्द्रदेवस्य व्यवहारं दृष्ट्वा रवीन्द्रदेवः आश्चर्यचकितः ।

आदित्य, भवान् वसतिगृहं प्रति गच्छतु । राज्ञः रक्षणविषये अहं चिन्ताक्रान्तोऽस्मि इदानीम् ।

अलं चिन्तया । राजा सुरक्षितः अस्ति । अचिरात् एव राजभवनं प्रत्यागमिष्यति सः ।



प्रवर्तमानघटनाः दृष्ट्वा जनाः दिग्भ्रान्ताः, चिन्ताक्रान्ताः च ।

किम् एते प्रधानमन्त्रिणः बन्धनसाहसं कुर्युः ?

स्यादपि तथा । तौ पितापुत्रौ यत्किमपि कर्तुम् अर्हतः ।

सेना जनसमूहं ततः निवारयति ।

अस्माकं प्रधानमन्त्रिणः न कोऽपि अपायः ।

प्रासादम् आगतेन सेनाधिपतिना विश्वासार्हाः अधिकारिणः आहूताः ।

शृण्वन्तु, प्रधानमन्त्री वासगृहतः बहिः न गच्छेत् । तं द्रष्टुम् आगच्छतां विषये अपि विशेषदृष्टिः भवतु

अस्तु सेनापतिवर्य सः भवनात् बहिः यथा न गच्छेत् तथा वयं पश्यामः ।

स्वप्रकोष्ठम् अस्तव्यस्तीकृतं पश्यति आदित्यः । श्रान्तिकारणतः सः द्वारं पिधाय निद्रां कृतवान् ।


राजभवने नरेन्द्रदेवः, रवीन्द्रदेवः च अवधानपूर्वकं देववाणीं शृणुतः ।
अहो, अहं राजानं पश्यामि । सः प्रसन्नचित्तः परिलक्ष्यते । तेन सह उभौ दृश्येते ।


एकः पुरुषः, अपरा नारी । राजा यत्र अस्ति स च प्रदेशः वन्यपशुभिः पूर्णः अस्ति । जलप्रपातः अपि दृश्यते इव । किमपि स्पष्टं नास्ति.....


पिता पुत्रः च भग्नाशौ भवतः ।
गरुडः !
आचार्यवर्य ! समीपतः पुनः पश्यतु तावत् ।
अहम् असहायोऽस्मि श्रीमन् ! अहो, तत्र दृश्यते गरुड-पक्षी । आकाशे निरन्तरं सञ्चरन् अस्ति सः ।
अनुवर्तते



चित्रशीर्षिका

# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ ततः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'डिसेम्बर्'मासीयस्पर्धाशीर्षिकाप्रेषकः -**
**सि.एस्.आर्. लिङ्गारेड्डि**
**आर्यसमाजः, शादीपुरम्,**
**खामपुरम्, नई दिल्ली - ११० ००८**

**पुरस्कृतशीर्षिका**





**मम रूपं शोभते भूषणेन ।**
**मम रूपं राजते सहजतयैव ।**

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

